ततो दीनाम् अ-दीनाऽङ्गीं ददर्श धनदाऽनुजः । [११पू
१०] चिन्तयन्तीं स्व-भर्तारम् अशोक-वनिकां गताम् ।[1]
उपाऽऽस्यमाना घोराभी राक्षसीभिर् अदूर-तः ॥९॥ [१२
११] उप-सृत्य ततः सीतां प्र-हर्षं नाम पूरयन् ।[2]
इदं च वचनं हृष्ट उवाच जनकाऽऽत्मजाम् । [१६
१२]अधो-मुखीं स्थितां बालाम् उर्द्ध्व-आसीनां पराङ्-मुखीम् १० [११उ
सान्त्व्यमाना मया भद्रे मां मेति प्रति-जल्पसि ।
१५] खर-हन्ता स ते भर्ता राघवः सम्-अरे हतः ॥११॥ [१७
छिन्नं ते सर्व-था मूलं दर्पस् ते नि-हतो मया ।
१६] व्य्-असनेनाऽऽत्मनः सीते मम भार्या भविष्यसि॥१२॥ [१८
N] अल्प-पुण्ये निवृत्ताऽर्थे मूढे पण्डित-मानिनि ।
१८उ] शृणु भर्तुर् वधं सीते घोरं वृत्र-वधं यथा ॥१३॥ [२०
उपाऽऽगतः समुद्राऽन्ते मां हन्तुं किल राघवः ।
१९] वानरेन्द्र-प्रणीतेन बलेन महता वृतः ॥१४॥ [२१
सन्नि-विष्टः सम्-उद्रस्य तीरम् आ-साद्य दक्षिणम् ।
२०] बलेन महता रामो व्रजत्य् अस्तं दिवा-करे ॥१५॥ [२२
अथाऽध्वनि परि-श्रान्तम् अर्ध-रात्रे स्थितं बलम् ।
२१] सुख-सुप्तं समा-साद्य चारितं प्रथमं चरैः ॥१६॥ [२३
तत् प्रहस्त-प्रणीतेन बलेन महता मम ।
२२] बलम् अभ्या-हतं रात्रौ यत्र राजा स राघवः ॥१७॥ [२४
पट्टिशाः परि-घाश् चैव गदा दण्डा महाऽऽयसाः ।

---

१. प्र रा$_2$ फ-भर्तारमनुध्यायन्तीं। २. म-नास्ति ॥ ३. रा$_2$ फ-हृष्टेनान्तरात्मना। ४. रा$_1$ ल$_1$ ल$_2$ म-उपासीनां । रा$_2$ फ म-उपविष्टां ॥ ५. प्र-मा मामिति प्रज० । रा$_2$ फ म-यमाश्रित्य प्रज० ॥ ६. म-नास्ति ॥ ७. म-यथाध्वनः ॥ ८. रा$_2$ फ-०शान् परिघांस् । ९. रा$_2$ फ-०[illegible] । १०. रा$_2$-महाजवान् ॥

२३] बाण-जालानि शूलानि भास्वराः कूट-मुद्गराः ॥१८॥ [२५
N] शक्ती(?)श् च तोमराश् चित्रां(?त्रा)श् चर्माणि मुसुलानि च ।
उद्-यम्योद्-यम्य रक्षोभिर् वानरेषु नि-पातिताः ॥१९॥ [२६
२५] अथ सुप्तस्य रामस्य प्र-हस्तेन प्र-माथिना ।
अ-सकृत् कृत-हस्तेन शिरश् छिन्नं महाऽसिना ॥२०॥ [२७
२६] उत्-पतंस् तौडितः पृष्ठे नि-पतंश् च यद्-ऋच्छया ।
२७पू] दिशं वि-द्रुतः पूर्वां लक्ष्मणः प्लव-गैः सह ॥२१॥ [२८
सु-ग्रीवो ग्रीवया शान्तो भग्नयाँ प्लवगाऽधिपः ।
२८] निरस्त-हनुर् आ-काशे हनु-मान् राक्षसैर् हतः ॥२२॥ [२९
इन्द्रजानु-सुजानुभ्यां जानुभ्यां पातितो भुवि ।
२९] पट्टिशैर् बहु-धा छिन्नः पतितः पाद-पो यथा ॥२३॥ [३०
मैन्दश् च द्वि-विदश् चोभौ नि-हतौ वानरौ रणे ।
३०] प्र-ध्वंसन्तौ नदन्तौ च रुधिरौघ-परिप्लुतौ ॥२४॥ [३१पू
युधि वि-क्रम्य पुत्रेण मम शक्र-जिता किल ।'' [N
३१] असिनाऽभ्या-हतश् छिन्नः प्रकीर्ण-सुमहाबलः । [३१उ
वि-चेष्टते च मेदिन्यां पनसः पेनसो यथा ॥२५॥ [३२
३२] नाराचैर् बहुभिर् भिन्नः शेते दधि-मुखः पुरा ।
कु-मुदः कुमुदाऽऽकारो नि-कुञ्जः सायकैः कृतः ॥२६॥ [३३
३३] अङ्ग-दो बहुभिर् भिन्नः 'शूलैः शेषैश् च राक्षसैः ।'
पतितो रुधिरोद्गारी मृतो नि-पतितोऽङ्ग-दः ॥२७॥ [३४

---

१. रा$_2$ फ-०रान् कूटमुद्गरान् ॥ २. रा$_2$ फ-चक्राणि । ३. रा$_2$ फ-वानराश्च ॥ ४. ल$_1$ ब रा$_2$-महात्मना ॥ ५. रा$_1$-उत्पतन् खण्डितः । ६. म-च विप्लुतः ॥ ७. प्र-मृतोसौ ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-निहतो । ९. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-बहुभिश् ॥ १०. रा$_2$ फ-निस्वनन्तौ ॥ ११. म-नास्ति । १२. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-०ना व्याहतश् । फ-०ना निहतश् । म-०ना च हतश् । १३. रा$_2$ फ म-अभितिष्ठति । १४. म-पन्नगो ॥ १५. म-शूरैर् । १६. रा$_2$ फ-कुमुदस्य महातेजा । १७. म-नास्ति ॥ १८. रा$_2$ फ-शूलैरासाद्य । १९. रा$_2$ फ म-क्षितौ ॥

३४] हयैर् अन्यैस्(?न्ये) तथा नागै रथैश् चक्रैम् तथा परे।
शयाना मृदितास् तत्र कपयः कुलिशैर् अपि ॥२८॥ [३५
३५] प्र-हृताश् चाऽपरे तत्र हन्यमाना जघन्य-तः ।
अनु-प्रपन्ना रक्षोभिः सिंहैर् इव महा-द्विपाः ॥२९॥ [३६
३६] सागरे पतिताः केचिद् गगनं केचिद् आ-श्रिताः ।
ऋक्षा वृक्षान् समा-रुह्य वानरैर् व्यति-मिश्रिताः ॥३०॥ [३७
३७] सागरस्य तु तीरेषु सागरोपवनेषु च ।
पिङ्गाऽक्षास् ते विरूपाऽक्षैर् बहुभिर् बहवो हताः ॥३१॥ [३८
३८] एवं तेऽभि-हतो भर्ता स-सैन्यो मम सैनिकैः ।
प्र-म्लानं च रजो-ध्वस्तम् इदं तस्याऽऽहृतं शिरः ॥३२॥ [३९
३९] ततः परम-दुर्धर्षो रावणो राक्षसेश्वरः ।
शृण्वन्त्यास् तत्र वैदेह्या राक्षसीर् इदम् अब्रवीत् ॥३३॥ [४०
४०] राक्षसं घोर-कर्माणं विद्युज्-जिह्वं प्र-वेशय(?थ) ।
तेन तद् राघव-शिरः सं-ग्रामात् स्वयम् आ-हृतम् ॥३४॥ [४१
४१] एवम् उक्तास् तु राक्षस्यो रावणेन दुर्-आत्मना ।
N] निर्-जग्मुस् त्वरिताः शीघ्रं विद्युज्जिह्व-निवेशनम् ॥३५॥ [N
४२ऊ] विद्युज्-जिह्वो गृहीत्वाऽथ शिरस् तत् स-शराऽऽसनम् ।
प्र-णामं शिरसा कृत्वा रावणस्याऽग्र-तः स्थितः ॥३६॥ [४२
४३] तम् अब्रवीत् ततो राजा रावणो राक्षसं स्थितम् ।
विद्युज्-जिह्वं समा-लोक्य समीपे परि-वर्तिनम् ॥३७॥ [४३

१. रा₂ फ-प्रचारा गोगणैरिव । म-प्राकारैर्गोगणैरिव ॥ २. रा₂ फ-असिभिस्त्वपरे । ३. रा₁ ल₂-०द्विपः । ४. प्र-नास्ति ॥ ५. ल₂ रा₂ फ म-च ॥ ६. प्र रा₂ फ म-सेनया । ७. रा₂ फ म-प्रस्तताक्षं ॥ ८. रा₂ फ-शृण्वन्त्यां तत्र वैदेह्यां ॥ ९. प्र-नास्ति । १०. रा₂ फ म-नास्ति । ११. प्र रा₂ फ म-नास्ति ॥ १२. रा₂ फ-०जिह्वस्ततो गृह्य सशिरस् । १३. प्र म-नास्ति । १४. प्र-नास्ति ॥ १५. रा₂ फ-महाजिह्वं ॥

४४] अग्र-तः कुरु सीतायाः शीघ्रं दाशरथेः शिरः ।
अव-स्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥३८॥ [४४
४५] एवम् उक्त्वं तु तद् रक्षस् तच् छिरः प्रिय-दर्शनम् ।
पुरो नि-क्षिप्य सीतायाः क्षिप्रम् अन्तर् अधीयत ॥३९॥ [४५
४६] रावणश् चाऽपि चिक्षेप भास्वरं कार्मुकं तदा ।
त्रिषु लोकेषु वि-ख्यातं रामस्यैतद् इति ब्रुवन् ॥४०॥ [४६
तद् रक्षसा तेन शिरः स-कार्मुकं
वि-शीर्यमाणं स-शरं मही-तले ।
नि-वेद्य तस्याः सम्-अरे हतं पतिं
N] ततोऽब्रवीत् तां भव मे वशाऽनुगा ॥४१॥ [४८
स रावणश् चारु-दतीं पति-व्रतां
निर्-ईक्ष्य भर्तुर् व्य्-असने चिकीर्षिताम् ।
उवाच सीतां किम् अवेक्ष्यम् अस्ति ते
४८] भवस्व भार्या मम मत्त-काशिनि ॥४२॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे माया-शिरो-दर्शनं नाम सप्तमः सर्गः ॥७॥

## [वं-८]= [अष्टमः सर्गः] =[दा-३२]

१पू] सा सीता तच् छिरो दृष्ट्वा तच् च कार्मुकम् उत्-तमम् । [१पू
२पू] नयने मुख-वर्णं च पत्युस् तत् सदृशं शनैः ॥१॥ [२पू
N] मुखम् इन्दु-प्रभं सौम्यं भर्तुः कमल-लोचनम् । [N

---

१. प्र-उत्तमं च । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-उपनि० ॥ ३. प्र-स शरं भास्वरं ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ-स र० । प्र म-स विद्युज्जिह्वेन । ५. रा$_2$ फ-विकीर्य० ॥ ६. ब अ प्र-लंकाकाण्डे । म-लंकापर्वणि ॥ ७. अतः परमधिकः पाठः-रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सुग्रीवप्रतिसंसर्गमाख्यातं च हनूमता । ८. रा$_1$ ल$_1$ ल$_2$ अ प्र रा$_2$ फ म-मुखवर्णं ॥

२उ] केशान् केशाऽन्त-देशं च तं च चूडा-मणिं शुभम् । [२उ
N] सु-श्लिष्टांश् च सु-समांश् चैव पाण्डरान् दशनांस् तथा ॥२॥ [N
एतैः सर्वैर् अभि-ज्ञानैर् अभि-ज्ञाय सु-दुःखिता ।
३] वि-जगर्हाऽथ कैकेयीं क्रोशन्ती कुररी यथा ॥३॥ [३
स-कामा खलु कैकेयी ममाऽऽर्या सौ भविष्यति ।
४] कुलम् उत्-सादितं सर्वं यया कलह-शीलया ॥४॥ [४
आर्यायाः किं नु कैकेय्याः कृतं रामेण वि-प्रियम् ।
५] यद् गृहाच् चीर-संवीतो राघवो विप्र-वासितः ॥५॥ [५पू
एवम् उक्ता (?क्त्वा) तु वैदेही वेपमाना तपस्विनी ।
६] जगाम जगतीं बाला छिन्नेव कदली यथा ॥६॥ [६
सा मुहूर्तात् समुत्था(द्-स्था)य प्रति-लभ्य च चेतनाम् ।
७] तच् छिरः समुपाऽऽघ्राय वि-ललापाऽऽयतेक्षणा ॥७॥ [७
हा हताऽस्मि महा-बाहो वीर-व्रतम् अनु-व्रता ।
८] इयं ते पश्चिमाऽवस्था मम हेतोर् उप-स्थिता ॥८॥ [८
९पू] प्रथमं मरणं नार्याः पत्युः पुंण्यम् इति स्मृतम् ।
मयि कस्मात् त्व् अ-वृत्तायां कालेनाऽसि नि-पातितः ॥९॥ [९
१०] दुःखाद् दुःखं प्र-पन्नाया मानायाः शोक-सागरे । [१०पू
राक्षसैर् वीर सं-सक्तो हतस् त्वं मम कारणात् । [९उ
११] योऽपि माम् उद्-यतस् त्रातुं सोऽपि त्वं किल पातितः १०[१०उ
हा श्वश्रूर् मम कौसल्या त्वया वत्सेन राघव ।

---

१. रा$_1$ ल$_1$ ब अ-श्रेष्ठांश्च सुस० । ल$_2$-श्रेष्ठांश्चैव समांश् । २. रा$_1$ ल$_2$ ब अ प्र रा$_2$ फ म- पांडुरान् ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-चं ।४. रा$_1$ ल$_1$-यथा ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ म- वीरसंभूतो । ६. म-०वोऽयं विवासितः ॥ ७. रा$_2$ फ-क्रंतेव ॥ ८. रा$_2$ फ-समुपादाय ॥ ९. म-प्रमाणं । १०. प्र-पश्चात्पत्युर् । ११. रा$_1$ ल$_1$ ल$_2$ ब अ-जीवंत्यां मयि कस्मात्त्वं ॥ १२. अ-नास्ति ॥ १३. रा$_2$ फ म-कौशल्ये ।

१२] वत्सेनेव विना धेनुर् वि-वशा वत्सला कृता ॥११॥ [११

आ-दिष्टं दीर्घम् आयुस् ते यैर् अचिन्त्य-पराक्रम ।

१३] अन्-ऋतं वचनं तेषाम् अल्पाऽऽयुर् असि राघव ॥१२॥ [१२

अ-दृष्टं मृत्युम् आ-पन्नः कस्मात् त्वं नय-शास्त्र-वित् ।

१४] व्य्-असनानाम् उपाय-ज्ञः कुशलः परि-वर्जने ॥१३॥ [१४

१५पू] अथ-वा वञ्च्यते प्र-ज्ञा प्राज्ञस्याऽपि समन्त-तः ।

१६पू] पचत्य् एव महान् कालो भूतानि प्र-भुर् अ-व्ययः ॥१४॥ [१३

१७उ] उप-शेषे महा-बाहो मां वि-हाय सु-दुःखिताम् ।

१८पू] प्रियाम् इव प्रियां नारीं पृथिवीं पृथिवीऽऽश्वरः ॥१५॥ [१६

१६उ] सं तया त्वं परि-ष्वज्य रौद्रया सु-नृशंसया ।

१७पू] काल-रात्र्या समा-छिद्य नीतः कमल-लोचन ॥१६॥ [१५

क्व गतस् त्वं महा-बाहो मां वि-हाय तपस्विनीम् ।

N] हू (?हृ) ताम् इव रणे भूमिं बलिना पार्थिवर्षभः ॥१७॥ [N

१८उ] सुखोचितं शरीरं ते सु-रूपम् अपि राघव । [N

अर्चितं सर्व-दा यत् तद् गन्ध-माल्याऽनुलेपनैः ।

१९] इदं तव शरीरं तु वि-प्र-कीर्णं मही-तले ॥१८॥ [१७

आर्येण ननु पित्रा त्वम् आर्य मा(?आ) यै (? यैश्)च राजभिः।

२०] पुण्य-वद्भिः क्रिया-वद्भिर् नूनं स्वर्गे समा-गतः ॥१९॥ [१८

दिवि नक्षत्र-भूतं च तथा क्रतु-कृत-प्लवम् ।

१. रा₂ फ म-विवत्सा ॥ २. प्र-अपि । म-इति । ३. अ-नास्ति ॥ ४. अ-नास्ति । ५. म-परिवर्तने ॥ ६. रा₂ फ म-नश्यते । ७. रा₂ फ म-सततस्तव । ८. रा₂ ब प्र-प्रभवोव्ययः ॥ ९. ल₂-उपदेशे । १०. रा₂ फ म-शुभां । ११. रा₁-पृथिव्यां ॥ १२. फ म-तया त्वं संपरि० । १३. अ-सुदुःखितां । १४. रा₁ ल₁ ल₂ ब अ प्र-प्रियां ॥ १५. रा₂ फ-तव । १६. रा₂ फ म-सततं ॥ १७. रा₁ ल₁ ल₂ ब अ प्र-०द्भिस् तूर्णं ॥ १८. म-त्वां । १९. प्र-तया सर्वक्रतुप्लवम् । रा₂ फ म-महाक्रतु० ।

२१] पुण्यं राजर्षि-वंश-त्वम् आत्मनः समवेक्षसे ॥२०॥ [१९
किं मां न प्रेक्षसे राजन् किं च मां नाऽभि-भाषसे ।[1]
२२] बालां बालस्य सम्प्राऽऽप्तां[2] स-वर्णां सह-चारिणीम् ॥२१॥[२०
सं-श्रुतं गृह्णता पाणिं भजिष्यामीऽति यत् त्वया ।
२३] स्मरं[3] तनुं[4] मम काकुत्स्थ नय माम् अपि दुःखिताम् ॥२२॥ [२१
कस्मान् मां त्वं वि-हायैको गतो मति-मतां वर ।
२४] अस्माल् लोकात् परं लोकं दुःखिताम् इह धार्मिक ॥२३॥ [२२
चन्दनाऽगुरु-दिग्धं यत्[5] परि-ष्वक्तं पुरा मया[6] ।
२५] क्रव्याऽद्भिस् तच् छरीरं ते नूनं हि[7] परि-कृष्यते ॥२४॥ [२३
अग्निष्टोमाऽऽदिभिर् यज्ञैर् इष्टवान् आप्त-दक्षिणैः ।
२६] अग्नि-होत्रेण[8] सत्-कारम्[9] अर्हस् त्वं नोप-लप्स्यसे ॥२५॥ [२४
प्र-व्रज्याम् उप-पन्नानां त्रयाणाम् एकम् आ-गतम् ।
२७] [10]परि-प्रक्ष्यति कौसल्या लक्ष्मणं शोक-लोलसम्[11] ॥२६॥ [२५
तस्याः सम्परि-पृच्छन्त्या हरणं मम रक्षसा ।
२८] तव चाऽऽख्यास्यते वीर सौप्तिके राक्षसैर् वधम् ॥२७॥ [२६
सा त्वां विबि-हि(?ह)तं[12] श्रुत्वा[12] मां तथा राक्षसैर् हृताम् ।
२९] हृदयेन वि-दीर्णेन[13] कौसल्या[14] न भविष्यति ॥२८॥ [२७
मम हेतोर् अन्-आर्यायास् त्वं हतः पार्थिवाऽऽत्मज ।[15]
N] राम सागरम् उत्-तीर्य भवान् किं नि-हतो निशि ॥२९॥[16] [२८

---

१. प्र-नास्ति । २. प्र-संत्रासां ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-संस्मरन् ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-त्यक्त्वा मां मन्दभागिनीं ॥ ५. म-कल्याणरुचिरं । ६. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-ते कस्माद्विपरिवर्तते । ७. प्र रा$_2$ फ म-विपरिकृष्यते ॥ ८. म-०होत्रादि । ९. प्र फ म-संस्कारम् ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-एकं प्रक्ष्यति । ११. म-०लालसा ॥ १२. रा$_2$ फ म-श्रुत्वा हतं पुत्रं । १३. रा$_2$ फ-हृदयेनावदानेन । १४. म-न भविष्यति वत्सला ॥ १५. प्र-नास्ति । १६. रा$_2$ फ म-नास्ति ॥

साधु घातय मां शीघ्रं रामस्योपरि रावण ।
३०] स्व-प्रियस्य प्रियां भार्यां कुरु कल्याणम् उत्-तमम् ॥३०॥ [३१
शिरस्य् अस्मिंश् छिरो धेहि काये कायं नि-वेशय ।
३१] रावणाऽनु-गमिष्यामि गतिं भर्तुर् महाऽऽत्मनः ॥३१॥ [३२
मुहूर्तम् अपि नेच्छामि जीवितुं पाप-जीवितम् । [३३पू
३२] समा-नय त्वं पतिना कुरु कल्याणम् उत्-तमम् ॥३२॥ [N
श्रुतं मया वेद-विदां ब्राह्मणानां पितुर् गृहे ।
३३] यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥३३॥ [३३
क्षमा यस्मिन् दया त्यागः सत्यं धर्मः कृतज्ञ-ता ।
३४] अ-हिंसा चैव भूतानां तम् ऋते का गतिर् मम ॥३४॥ [३४
इति सा दुःख-सन्तप्ता वि-ललापाऽऽयतेक्षणा ।
३५] भर्तुः शिरो धनुश् चैव सम्प्रेक्ष्य जनकाऽऽत्मजा ॥३५॥ [३५
एवं वि-लप्यमानायां सीतायां तत्र रावणम् ।
३६] अभि-चक्राम भर्तारं बलाऽध्यक्षः कृताऽञ्जलिः ॥३६॥ [३६
एतस्मिन्न् अन्तरे द्वाः-स्थो रावणाय न्य्-अवेदयत् ।
३७] कार्यम् आत्ययिकं घोरं सं-ज्ञया भ्रान्त-लोचनः ॥३७॥ [N
वि-जयस्वाऽऽर्य-पुत्रेति सोऽभि-भाष्य प्र-णम्य च ।
३८] आ-चचक्षे तदा कृत्यं राक्षसेन्द्राय वि-स्मितः ॥३८॥ [३७
अमात्यः संहितः सर्वैः प्र-हस्तस् त्वाम् उप-स्थितः । [३८पू
३९] किं-चिद् आत्ययिकं कार्यम् आ-चिख्यासुर् इहाऽऽगतः॥३९[३९उ
४०पू] एवम् उक्तस् ततस् तेन रावणो गृहम् अभ्य्-अगात् । [N

१. अ रा$_2$ फ-सुप्रि० ॥ २. रा$_1$ ल$_1$ ल$_2$ ब प्र रा$_2$-लोके महोदयः । अ-लोको महोदयः॥ ३. रा$_1$ ब म-भ्रान्तचेतनः ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब अ-क्षन्ता ॥ ५. ल$_2$ म-सहितैः । ६. प्र-त्वाजिज्ञासुर् ॥ ७. रा$_2$ फ म-तस्माद् । ८. ल$_1$-०णो गृहमागतः । रा$_2$ फ म-निर्जगाम महाबलः ॥ ९. प्र-नास्ति ।अतः परमधिकः पाठः—रा$_2$ फ म-स ह्यमात्यम्प्रहस्तं च ददर्श दूरतः स्थितं । सर्वैः समेत्य रक्षोभिर्मन्त्रिभिः कृतनिश्चयः ॥

सभां प्र-विश्य वि-दधे विदित्वा राम-विक्रमम ॥४०॥ [४१उ

४२] अन्तर्-धानं तु तच् छीर्षं तच् च कार्मुकम् उत्-तमम् ।

जगाम राक्षसे तस्मिन् निष्-क्रान्ते सम्-अनन्तरम् ॥४१॥ [४२

४३] राक्षसेन्द्रस् तु भवनात् स्वयं निष्-क्रम्य सं-त्वरः[1] ।

स मन्त्रयामास तदा मन्त्रं तैर् मन्त्रिभिः सह ॥[2]४२॥ [४३

४४पू] अति-दूरान् स्थितान् ह्य् अस्य बलाऽध्यक्षान् हितैषिणः ।

४५पू] अब्रवीत् तान् नि-शाम्यैव रावणो राक्षसेश्वरः ॥४३॥ [४४

४४उ] शीघ्रं भेरी-निनादेन स्फुट[3]-कोलाहलेन मे[3] ।

४५उ] समा-नयध्वं[4] सैन्यानि वि[5]-मर्षो न क्षमो हि नैः ॥४४॥ [४५

बलाऽधिपाम्[6] ते बल-योगम् आत्मनः

ततस् तथेति प्रति-गृह्य तद् वचः ।

समा-हिता[7] भर्तृ-हिताय नैर्ऋता

N] जयाय घोषान् परि-गृह्य धि-ष्ठिताः ॥४५ [४६

इत्यार्षे रामायणे युद्ध-काण्डे सीता सम्मोहनं नामाऽष्टमः सर्गः ॥८॥

[वं-९]= [ नवमः सर्गः ] =[दा-३३]

तां त्व् एवं मोहितां दृष्ट्वा सरमा नाम राक्षसी ।

१] आ-ससादाऽथ वैदेहीं प्रियां समयिनीं सखीम् ॥१॥ [१

---

१. फ-निष्क्रम्य कृतसत्वरः । २. रा₁-नास्ति ॥ ३. रा₁ ल₁ ल₂ ब भ प्र रा₂-परं कौतूहलेन च । ४. प्र-०नयित्वा । ५. म-वेगेन महता भृश ॥ ६. रा₁ ल₁ ल₂ ब भ प्र-बलांघ्रिया । ७. फ-समास्थिता । म-समागता । ८. म-भर्तृवधाय । ९. फ-योधाः परिवार्य । म-योधान् प्रतिगृह्य ॥ १०. ब प्र-लंकाकाण्डे । रा₂-नास्ति । म-लंकापर्वणि । ११. प्र रा₂ फ-०हनो ॥ १२. रा₁ ल₁ ल₂ ब भ प्र फ-नैव । १३. रा₂ फ म-ज्ञात्वा । १४. रा₁ ल₁ ल₂ ब भ प्र म-०दाशु । १५. रा₂-प्राणसमां ॥

सा हि तत्र च कृता मित्रं[1] सीतया रक्ष्यमाणया ।
२] राक्षसी रावणाऽऽदिष्टा साऽनुक्रोशा दृढ-व्रता ॥२॥ [३
सा ददर्श सखीं[2] सीतां सरमा नष्ट-चेतनाम् ।
३] उप[3]-विश्योत्थि(दू-स्थि)तां ध्वस्तां वडवाम् इव पांसुभिः ॥३॥ [४
४पू] ताम् उवाच तथा[4] दृष्ट्वा सरमा प्रिय-वादिनी ।[5] [२उ
मा वि-षादं विशालाऽक्षि कुरुष्व[6] जनकाऽऽत्मजे ॥४॥
५] उक्ता यद् रावणेन त्वं प्रत्यु[7]-अयो यस् त्वया कृतः[7] ।
सखि[8] स्नेहेन ते[9] भीरु मया[9] सर्वं[10] स्वयं श्रुतम्[10] ॥५॥ [६
६] लीनया[11] गहने शून्ये भयम् उत्-सृज्य रावणात् ।
तव[4] हेतोर् विशालाऽक्षि नहि मे जीवितं प्रियम् ॥६॥ [७
८] सं-भ्रान्तश् चोपनिष्-क्रान्तो यद्[12] इतो[12] राक्षसेश्वरः ।
तच् च मे विदितं सर्वम् उपनिष्-क्रम्य मैथिलि ॥७॥ [८
९] न शक्यं[13] सौप्तिकं[13] कर्तुं रामस्य विदिताऽऽत्मनः ।
वधश् च पुरुष-व्याघ्रे तस्मिन् नैवोप-पद्यते ॥८॥ [९
१०] ते[14] च शूरा[15] हरि-व्याघ्रा वि-क्रान्ताः पादपाऽऽयुधाः ।
पुरा देवेश्वरेणैव रामेण परि-पालिताः ॥९॥ [१०
११] दीर्घ-वृत्त-भुजः श्री-मान् महोरस्कः प्रताप-वान् ।

१. रा$_1$, ल$_1$, ल$_2$ ब ब्र प्र-सा तदा तु ॥ २. प्र म-सतीं । ३. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-उपावृत्योक्ता ॥ ४. रा$_1$ ल$_1$ ल$_2$ प्र-तदा । रा$_2$ फ-ततो । ५. अतः परमधिकः पाठः—रा$_2$ फ-स्नेहवैक्लव्या वाचा सान्त्वयित्वा प्रियां सखीं । ६. प्र फ-नास्ति । ७. रा$_2$ म-प्रत्युक्तं यस्त्वया सकृत् । ८. रा$_1$ ल$_1$ ल$_2$ ब ब्र-सखीस्ने० । ९. रा$_1$ ल$_1$ ल$_2$ ब ब्र-तत्सर्वं । म-यद्भीरु । १०. रा$_1$ ल$_1$ ल$_2$ ब ब्र-भीरु प्रतिश्रुतं । ११. रा$_1$ ल$_1$ ल$_2$ ब ब्र- लीलया । १२. ल$_2$ रा$_2$-यदि ते ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-शक्ताः स्माप्रियं ॥ १४. रा$_2$-वानराः । १५. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-०पा यथा ॥

१२पू] धन्वी संहत-वृत्तोरुर् भर्ता ते भुवि वि-श्रुतः ॥१०॥ [११
N] अ-क्षय्यो रक्षिता नित्यम् आत्मनश् च बलस्य च ।
लक्ष्मणेन सह भ्रात्रा कुशली शास्त्र-तत्त्व-वित् ॥११॥ [१२
१३] हन्ता पर-बलौघानां पौरुषे धन्य-लक्षणः ।
न हतो राघवः सीते श्री-मान् शत्रु-निबर्हणः ॥१२॥ [१३
१४] अ-युक्ता बुद्धि-हीनेन सर्व-भूत-विरोधिना ।
इयं तेन नृ-शंसेन माया मायाविना कृता ॥१३॥ [१४
१५] शोकस् ते वि-हतः सद्यः कल्याणं त्वाम् उप-स्थितम् ।
ध्रुवं ते भजते लक्ष्मीः प्रियं प्रीति-करं शृणु ॥१४॥ [१५
१६] सं-तीर्णः सागरं रामः सह वानर-सेनया ।
सन्नि-विष्टः समुद्रस्य तीरम् आ-साद्य दक्षिणम् ॥१५॥ [१६
१७] सं-हृष्टः परिपूर्णाऽर्थः काकुत्स्थः स महा-बलः ।
स-हितः सागरोपाऽन्ते राक्षसैर् उप-लक्षितः ॥१६॥ [१७
१८] तैस् तथा प्रेक्षिता गुल्मैर् हरयस् ते प्र-दक्षिणाः ।
प्र-वृत्तिस् तैर् उपाऽऽनीता श्वोऽभि-सारः पुरस्य च ॥१७॥ [१८
१९] एतां श्रुत्वा तु सु-श्रोणि प्र-वृत्तिं राक्षसाऽधिपः ।
एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥१८॥ [१९
२०] इति ब्रुवाणा सरमा मैथिलीं नष्ट-चेतनाम् ।
सर्वोद्-योगेन योधानां शब्दं शुश्राव दारुणम् ॥१९॥ [२०

---

१. फ-अक्षतो ॥ २. रा$_{2}$ फ-भेत्ता च परसैन्यानां । ३. म-पुरुषो ॥ ४. म-मायया परिमोहिता ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र फ म-विहितः । ६. रा$_{2}$ फ-त्वां समुपा० ॥ ७. प्र-सहलक्ष्मणः । रा$_{2}$ म-सुसमाहितः । ८. रा$_{1}$ ल$_{1}$ ब श्र प्र-सहितैः । रा$_{2}$-प्रहृतैः । ९. रा$_{2}$ फ-सागरान्तेषु ॥ १०. रा$_{2}$ फ-ततः । ११. रा$_{2}$-हरिदूताः । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र-०क्षिणैः । १३. म-इहानीता । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र-सोभिहारपुरस्सरः ॥ १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ श्र प्र-एतत्तु श्रुत्वा ॥ १६. म-सर्वं ॥

२१] ताडितायाम् तथा भेर्याः श्रुत्वा प्रति-भयं स्वनम् ।[1]
उवाच सरमा सीताम् इदं [2]मधुरया गिरा[2] ॥२०॥ [२१
२२] [3]सन्नाह-जननी ह्य् एषा भेरी वै भीम-नादिनी ।[4]
एषा नदति गम्भीरं [5]श्रृणु तोयद-[6]सन्निभा ॥२१॥ [२२
२३] [7]कल्यन्ते मत्त-मातङ्गा युज्यन्ते रथ-वाजिनः । [२३पू
तत्र तत्र च सं-नद्धाः सं-पतन्ति[8] पदातयः ॥२२॥
२४] अनीकैः पूर्यते सर्वै राज-मार्गः समन्त-तः ।
वेग-वद्भिर् [9]महा-वेगैर् [10]महौघैर् इव सागरैः ॥२३॥ [२४
२५] शस्त्राणां च प्र-सन्नानां वर्मणां चर्मणां तथा ।
N] रथानां भूषितानां च भूषितानां च[11] रक्षसाम् ॥२४॥ [२५
प्र-भां वि-सृजतां पश्य नाना-वर्ण-समुच्छ्रि[12]ताम् ।
२६] वनं निर्-दहतो घर्मे यथा रूपं विभा-वसोः ॥२५॥ [२६
घण्टानां [13]चण्ड-निर्घोषं रथानां [14]श्रृणु निः-स्वनम् ।
२७पू] हयानां [15]हेषमाणानां श्रृणु तूर्य-स्वनं तथा ॥२६॥ [२७
उद्यताऽऽयुध-[16]शस्त्राणां राक्षसेन्द्रा[17]ऽनुयायिनाम् ।
२८] रक्षसां सं-भ्रमो ह्य् एष तुमुलो लोम-हर्षणः ॥२७॥ [२८
श्रीस् त्वां भजतु शोक-घ्नी[18] रक्षसां भयम् आ-गतम् । [२९
२९] रामात् कमल-पत्राऽक्षि दैत्यानाम् इव वासवात् ॥२८॥

---

१. रा१ ल१ ल२ ब अ प्र-नास्ति । २. रा१ ल१ ब अ प्र-मधुरवादिनी । ल२-मधुरवादिनीं ॥ ३. रा२ फ-संमोह० । ४. अ-नास्ति । ५. रा१ ल१ ल२ ब अ प्र-०दनिःस्वनं । ६. म-नास्ति ॥ ७. रा२ ब-काल्यन्ते । ८. प्र-समुद्यन्ति ॥ ९. ब-महाभागैर् । १०. रा१ ल१ ल२ ब अ प्र-मेघैरिव महार्णवः ॥ ११. प्र-तु ॥ १२. रा१ ल१ ल२ ब अ प्र म-०समुत्थितां ॥ १३. फ-शृणु निर्घोष । १४. म-चैव । १५. रा२-ह्रेष० ॥ १६. म-०धसत्त्वानां । १७. रा१ ल१ ल२ ब अ प्र-राममेवानु० ॥ १८. म-शोकघ्ना ॥

अव-जेतुं जित-क्रोधस् तान्[1] अचिन्त्य-पराक्रमः ।
३०] अ[2]-चिराद् विद्धि पूर्वेण लङ्काम् अधि-गमिष्यति ॥२९॥ [३०
वि-क्रमिष्यति रक्षःसु भर्ता ते सह-लक्ष्मणः ।
३१] यथा शत्रुषु वि-क्रान्तो विष्णुना सह वासवः ॥३०॥[3] [३१
आ-गतस्य[4] हि रामस्य क्षिप्रम् अङ्क-गतां[5] सखि[6] ।
३२] अहं द्रक्ष्यामि सिद्धाऽर्थां त्वां शत्रौ त्रिनि-पातिते ॥३१॥ [३२
अश्रूण्य् आनन्द-जानि त्वं वर्तयिष्यसि शोभने ।
३३] समा-गम्याऽचिरेण त्वां नन्दयिष्यति राघवः । [३३
N] अ-वर्षाद् इव शुष्यन्तीं महा-मेघो वसुन्धराम् ॥३२॥ [N
अ-चिरान् मोक्ष्यसे सीते वि-पुलं बन्धनं[7] गता[8] ।
३४] वृत्ताम् एकां वहन्त्य् अद्य वेणीं तेन शुभाऽऽनने ॥३३॥ [३४
३५उ] तस्य दृष्ट्वा मुखं देवि पूर्ण-चन्द्रम् इवोदितम् ।
३६पू] मोक्षसे सहसा शोकं निर्-मोकम् इव पन्न-गी ॥३४॥[10] [३५
३७उ] रावणं सम्-अरे हत्वा न चिराद् इव मैथिलि ।
त्वया सम्-अग्रं प्रियया राघवो लप्स्यते सुखम् ॥३५॥[11] [३६
समा-गता त्वं रामेण शोभिष्यसि[12] वराऽऽनने ।
३८] अवर्ष-शुष्केव पुरा नव-सस्या[13] वसुन्धरा[13] ॥३६॥[14] [३७
गिरि-वरम् अभि-तो वि-वर्तमानो
हय इव मण्डलम् आशु यः करोति ।
त्वम् इह शरणम् अभ्युपै(?पे) हि सीते

१. रा₂ फ म-त्वां । २. रा₂ फ-रावणं समरे हन्तुं ॥ ३. अतः परमधिकः पाठः—रा₁ ल₁ ल₂ ब श्र प्र-सुग्रीवसहितः श्रीमान् वानरैश्च महाबलैः ॥ ४. रा₂ फ म-आगतस्येह । ५. ल₁-०गतामपि ॥ ६. रा₂ फ म-जघने गतां । ७. रा₂ फ म-बहून्मासान् । ८. रा₂ फ म-रामः ॥ ९. रा₁ ल₁ ल₂ ब श्र प्र रा₂-मोक्ष्यते । १०. म-नास्ति ॥ ११. रा₁ ल₁ ल₂ ब श्र प्र-देवि ॥ १२. रा₂ प्र-भविष्यसि । १३. रा₂-नवसस्येव मेदिनी । १४. म-नास्ति ॥

३९] दिवस-करं प्रभवोऽप्ययं प्र-जानाम् ॥३७॥ [३८

इत्यार्षे रामायणे युद्ध-काण्डे सरमा-वाक्यं नाम नवमः सर्गः ॥९॥

[वं-१०]= [ दशमः सर्गः ] =[दा-३४]

अथ तां जात-सन्तापां तेन वाक्येन मोहिताम् ।
१] सरमा ह्लादयाञ्चक्रे पृथिवीं द्यौर् इवाऽम्भसा ॥१॥ [१
ततस् तस्या हितं भूयश् चिकीर्षन्ती सखी वचः ।
२] उवाच काले काल-ज्ञा स्मित-पूर्वाऽभिभाषिणी ॥२॥ [२
उत्-सहेयम् अहं गत्वा त्वद् वाक्यम् असितेक्षणे ।
३] नि-वेद्य सकलं रामे प्रति-च्छन्ना नि-वर्तितुम् ॥३॥ [३
न हि मे क्रममाणाया निरा-लम्बे वि-हायसि ।
४] सम्-अर्थो गतिम् अन्व्-एतुं वायुर् अप्य् अति-शीघ्रगः ॥४॥[11] [४
एवं ब्रुवाणां तां सीता सरमाम् अब्रवीद् वचः ।
५] मधुरं श्लक्ष्णया वाचा पूर्व-शोकाऽवदीर्णया ॥५॥ [५
सम्-अर्था गगनं गन्तुम् अपि वा त्वं रसा-तलम् ।
६] अव-गच्छामि कर्तव्यं कर्तव्यं ते मद् अन्तरे ॥६॥ [६
स्निग्धा त्वम् अनु-रक्ता च भगिनीऽव सहोदरा ।
७] त्वं प्र-सन्ना मम हिता सं-शयो मे न विद्यते ॥७॥[16] [N

१. अ-प्रभयाप्ययं । रा$_2$ फ-०वाव्ययं । २. ल$_1$ ल$_2$ अ प्र फ-प्रज्ञानां ॥ ३. फ म- नास्ति । ४. ब अ प्र-लंकाकांडे । फ-लंकापर्व्वणि । ५. ब-सरसावा० ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-वाक्यं चिकीर्षन्तीं सखीं तदा ॥ ७. रा$_1$ ल$_1$ ल$_2$ अ प्र-तद् ॥ ८. म-विक्रम० । ९. प्र-अन्वेष्टुं । १०. प्र-अभ्येति शी० । फ-०शीघ्रतः । ११. अ-नास्ति ॥ १२. प्र-०वकीर्णया ॥ १३. प्र-सर्वथा । १४. रा$_1$ ल$_1$ ल$_2$ ब प्र-तं । १५. रा$_2$ फ-सर्वं यत् ॥ १६. रा$_2$ फ म-नास्ति ॥

मत्-प्रियं यदि कर्तव्यं यदि मैत्री स्थिरा तव ।
८] त्वत्-तोऽहं ज्ञातुम् इच्छामि किं करोति स रावणः ॥८॥ [७
स हि माया-बलो रौद्रो रावणः सर्व-रावणः ।
९] मां मोहयति दुष्टाऽऽत्मा पीत-मात्रेव वारुणी ॥९॥ [८
सं-तर्जयति मां नित्यं भर्त्सयत्य् अपि चाऽसकृत् ।
१०] राक्षसीभिः सु-घोराभिर् यो मां रक्षति सर्व-शः ॥१०॥ [९
उद्-विग्ना शङ्किता चाऽस्मि न च स्व-स्थं मनो मम ।
११] यद् भयं प्राऽऽप्नुवत्य् उच्चैर् अशोक-वनिकां गता ॥११॥ [१०
१२उ] एतम् इच्छाम्य् अहं त्वत्-तो वरं सत्य-प्रतिश्रवे ।
१३पू] लघु यद् रावणस्याऽहं सर्वं विद्यां वि-चेष्टितम् ॥१२॥ [N
१४पू] ताम् एवं वादिनीं सीतां सरमा वल्गु-वादिनी ।
उवाच वचनं तस्याः श्रुत्वा सा वाक्य-विक्लवम् ॥१३॥ [१२
१५] एष ते सख्य् अभि-प्रायस् तद् गच्छामि जानकि ।
दृष्ट्वा शत्रोर् अभि-प्रायम् उपाऽऽवर्ताम्य् अहं पुनः ॥१४॥ [१३
१६] एवम् उक्त्वा ततोऽभे(?भ्ये)त्य समीपे तस्य रक्षसः ।
शुश्राव कथितं सर्वं रावणस्य स-मन्त्रिणः ॥१५॥ [१४
१७] सा श्रुत्वा निश्-चयं तस्य तस्मिन् काले दुर्-आत्मनः ।

---

१. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र म-स्थिता । २. रा$_{2}$ फ- ततोहं ॥ ३. रा$_{1}$ ल$_{1}$ल$_{2}$ ब-नास्ति ॥ ४. रा$_{1}$-चाकृतं । ५. रा$_{1}$ ल$_{1}$ल$_{2}$ ब श्र प्र म-नित्यशः ॥ ६. म-नास्ति । ७. प्र-च प्राप्नुवती । रा$_{2}$ फ म-मामनुप्राप्तं । ८. प्र रा$_{2}$ फ म-गतां । ९. अतः परमधिकः पाठः—रा$_{2}$ फ म-तदीच्छामि कथं तस्य निश्चयो वास्य यो भवेत् । निवेदयेथाः सर्वं मे यतो मे स्यादनुग्रहः । यं यं पश्याम्यहं किंचित्तं तं मन्येय रावणं ॥ १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र-तदिच्छामि परं । रा$_{2}$-एतदिच्छा० ॥ ११. रा$_{2}$ फ म-वल्गुभाषिणी । १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र-वाक्यविक्लवा ॥ १३. रा$_{2}$ फ म-यद्यभि० । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र-वक्ष्यामि । १५. रा$_{1}$ ल$_{1}$ल$_{2}$ ब श्र प्र-दृष्ट्वा । १६. रा$_{1}$ल$_{1}$ल$_{2}$ ब श्र प्र-०वर्ते पुनः पुनः ॥ १७. रा$_{2}$ फ म-ततो गत्वा समीपं । १८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्र प्र- श्रुत्वा च ॥

पुनर् अप्य्[1] आऽगमत् क्षिप्रम् अशोक-वनिकां शुभाम् ॥१६॥ [१५
१८] सा[2] प्र-विश्य ततस् तत्र समीत्य[3] (?ये) जनकाऽऽत्मजाम् ।
प्रतीऽऽक्षमाणां ताम् एव पद्म-हीनाम् इव श्रियम् ॥१७॥ [१६
१९] तां तु सीता पुनः प्राऽऽप्तां सरमां प्रिय-वादिनीम् ।
२०पू] परि-ष्वज्य च सु-स्निग्धं प्र-ददौ स्वयम् आसनम् ॥१८॥ [१७
इहा[4]ऽऽस्यतां सुखं सर्वम् आ-ख्याहि मम तत्त्व-तः ।
२१] क्रूरस्य निश्-चयं तस्य रावणस्य स-मन्त्रिणः ॥१९॥ [१८

को हि नाम महा-भागे मम पुण्य-विपर्यये ।
२२] अनु-रक्षति माम् अन्यस् त्यक्त्वा त्वां पुण्य-भाषिणीम् ॥२०॥[5] [N
सम्-अर्थः सर्व[6]लोके को भद्रो वै शरणाऽर्थिनः ।
२३] त्वं तु निष्-कारणाद् देवि प्रीयसे[7] वर-वर्णिनि ॥२१॥ [N
त्वं तु युक्ताऽभिजानी(?ती)थाः(?या)शुक्ल-वासाश् च नित्य-दा ।
२४] सर्वेषां रक्षसां मध्ये गङ्गेव निर्-अपायिनी ॥२२॥ [N
कश् चि(?चो)द्-गच्छेद् द्रुतं चाऽस्य वचनस्याऽन्तम् आप्नुयात् ।
२५] सर्व-स्निग्धाम् ऋते त्वां तु तस्माद् आ-ख्याहि मा चिरम् २३ [N

एवम् उक्त्वा[8] तु सरमा सीतया तत्त्वम् उत्[9]-तमम् ।
२६] कथितुं सर्वम् आ-रेभे रावणस्य स-मन्त्रिणः ॥२४॥[10] [१९
२७उ] जनन्यो[11] राक्षसेन्द्रोऽसौ[12] मोक्षाऽर्थे तव याचितः ।
अ-विन्ध्येन[13] च वैदेहि मन्त्रि-मुख्येन यत्न[14]-तः ॥२५॥ [२०

१. रा$_2$ फ म-एवाग० ॥ २. रा$_2$ फ म-सम्प्रविष्टा । ३. ल$_1$ ब श्र-समेत्य । प्र-प्रविश्य । रा$_2$ फ म-ददर्श ॥ ४. रा$_2$ फ म-इहासीना ॥ ५. रा$_2$ फ म-नास्ति ॥ ६. ब-भिन्नाः—सकलो लोको । ७. प्र-प्रेयसी ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-उक्त्वा । ९. ल$_1$-उत्तरं । १०. रा$_2$ फ म-उपविष्टा तु सा तत्र विष्टरे स्वर्णभूषिते । वक्तुं विनिश्चय तस्य रावणस्योपचक्रमे ॥ ११. म-राजत्या । १२. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-०न्द्रो वै । फ म-०न्द्रोऽय । १३ रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-अवगम्य । १४. रा$_1$ ल$_1$ ल$_2$ ब श्र प्र-तस्वतः ॥

२८] दीयताम् अभि-सत्कृत्य कोसलेन्द्राय मैथिली ।
नि-दर्शनं ते[1] परमं जन-स्थाने महाऽद्भुतम्[2] ॥२६॥ [२१
२९] लङ्घनं च सम्-उद्रस्य दर्शनं चाऽस्य[3] रूपिणः ।
वधं च रक्षसां युद्धे कः कुर्यान् मानवो भुवि ॥२७॥[4] [२२
३०] एवं स मन्त्रि-मुख्ये(?न) मात्रा च बहु-भाषितः ।
न त्वाम् उत्-सहते त्यक्तुम् अर्थम् अर्थ-परो यथा ॥[6]२८॥ [२३
३१] नोत्-सहेताऽहतो मोक्तुं युद्धे त्वाम् इति मैथिलि ।
साऽमात्यस्य नृ-शंसस्य निश्-चयोऽयं सु-निश्चलः ॥२९॥[8] [२४
३२] एषा तस्य स्थिरा बुद्धिर् मृत्यु-भावाद् उप-स्थिता ।[9]
न तेन शक्यो त्वं मोक्तुम् अ-निरस्तेन सं-युगे ॥३०॥ [२५
३३] मा चिन्तां कुरु वैदेहि सर्व-था राघवः शरैः । [N
३४पू] नि-हत्य रावणं सीते त्वां प्रियाम् उप-लप्स्यते ॥३१॥ [२६पू
३५पू] एतस्मिन्न् अन्तरे शब्दो भेरी-शङ्ख-समाऽऽकुलः । [२७पू
N] उत्थि(द्-स्थि)तो वानर-बले हर्षेण च सम्-अन्व्-इतः(?तम्) । [N
३५उ] राघवस्याऽऽपतेत्[12] सैन्यं कम्पयन् सर्व-राक्षसान् ॥३२॥ [२७उ

श्रुत्वा नू(?च) नं(?तं) वानर-सैन्य-नादं[13]
लङ्का-गता राक्षस-राज-भृत्याः ।
भ्रष्टौजसो दैन्य-परीत-चित्ताः
३६] श्रेयो[15] न पश्यन्ति नृपस्य देवि[16] ॥३३॥[17] [२८

ततो महा-वात-समीरितेन

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र- च । २. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-महद्भयं ॥ ३. रा$_2$ फ म-च स्वरूपिणः । ४. ल$_2$-नास्ति ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब प्र रा$_2$ फ म-०मुख्यैश्च । ६. ल$_2$ अ-नास्ति ॥ ७. रा$_2$ फ म-शुचिस्मिते । ८. अ-नास्ति ॥ ९. म-शक्यते ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-शान्तां ॥ ११. रा$_2$ फ-समुत्सुके । प्र म-समुत्सुकः । १२. रा$_1$ ल$_1$ ल$_2$ ब अ-राघवस्याग्रतः । प्र-०स्यागतं ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-समाकुला राघवबाणभीता । १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०तचेतसः । १५. रा$_1$ फ-शेषं । १६. रा$_2$ फ-दोषैः । १७. म-नास्ति ॥

घोरेण शब्देन समुच्-छ्रितेन ।

वि-षादम् आऽगात् सकला महा-पुरी

३७] वनौकसां शब्दम् अ-मृष्यमाणा ॥३४॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे सरमा-वाक्यं नाम दशमः सर्गः ॥१०॥

## [वं-११]= [एकादशः सर्गः] =[दा-३५]

तेन शङ्ख-विमिश्रेण भेरी-शब्दोऽनुवादिना । [१पू

N] राव(?घ)ण(?व)स्याऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम्[१] ।[N

समा-गतं तु तस्याऽथ राव(?घ)ण(?व)स्य महा-बलम् ।

N] अशोभत तदा सर्वं स्तिमितः सागरो यथा ॥२॥ [N

N] सम्-आसीनस् तदा राजा दृष्ट्वा सैन्यम् अव-स्थितम् । [N

२उ] मुहूर्तं ध्यानम् आ-स्थाय सचिवान् अभ्युद्-ऐक्षत ॥३॥ [२उ

अथ तान् सचिवांस् तत्र सर्वान् आ-भाष्य रावणः ।

३] जगत् सं-नादयन् सर्वम् अब्रवीद् राक्षसेश्वरः ॥४॥ [३

तरणं सागरस्याऽस्य वि-क्रमं बल-संश्रयम् ।

४] यद् उक्त-वन्तो रामस्य भवन्तस् तन् मया श्रुतम् ॥५॥ [४

तीर्णश् च सागरं रामः सेतुना वानरैः सह ।

५] अ-मर्षी स-गणः सोऽयं साऽमात्यो न भविष्यति ॥६॥ [N

निर्-यान्तु राक्षसाः सर्वे निशिताऽऽयुध-पाणयः ।

१. रा$_1$ ल$_1$ ल$_2$ ब श्र म-समन्वितेन । फ म-समुत्थितेन ॥ २. ब श्र प्र-लंकाकाण्डे । म-लंकापर्वणि । ३. म-रावणाभिप्रायो ॥ ४. प्र-भेरीशंखानु-नादिना । ५. रा$_2$ फ म-नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब श्र-तदा तस्य । ७. रा$_1$ ल$_1$ ल$_2$ ब श्र-सैन्यं ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब श्र फ-०सगंम ॥ ९. म-विविधायुध० ।

६] नि-घ्नन्तु वानरं-बलं[1] तौ चोभौ[2] राम-लक्ष्मणौ ॥७॥ [N
ततः प्राऽऽप्तः[3] सु-हृतं स्निग्धो माल्य-वान् नाम राक्षसः ।
९] उवाच रावणं मन्त्री वृद्धाऽमात्यो बहु-श्रुतः ॥८॥ [६
विद्याऽविद्यो[4]-विनीतो यो राजा राजन्[5] नयोऽनुगः ।
१०] प्र-शास्ति[6] चिरम्[7] ऐश्वर्यम् अरींश् च कुरुते वशे ॥९॥ [७
सं-दधानो हि कालेषु वि-ग्रहं चाऽरिभिः[8] सह ।
११] स्वपक्ष-वचनं कुर्वन् महद् ऐश्वर्यम् अश्नुते ॥१०॥ [८
हीयमानेन पर्य्-एष्यो राज्ञा सन्धिः समेन च ।
१२] न शत्रुर् अव-मन्तव्यो ज्यायान् कुर्वीत वि-ग्रहम् ॥११॥[9] [९
१३पू] तन् मह्यं रोचते सन्धिस् तव रामेण रावणः(?ण)[10] । [१०पू
१४उ] वि-रोधं मां गमस् तेन सन्धिस् ते तेन रोचताम् ॥१२॥ [N
१३उ] यद्-अर्थम् अभि-युक्तोऽसौ साऽस्मै सीता प्र-दीयताम् ।[11] [१०उ
१४पू] तस्य देवर्षयः सर्वे गन्धर्वाश् च जयैषिणः ॥१३॥ [११पू
असृजद् भग-वान् पक्षौ द्वाव् एव हि पिता-महः ।
१५] सुराणाम् अ-सुराणां च धर्माऽधर्माव् ऋताऽनृतौ ॥१४॥ [१२
धर्मो[12] हि श्रूयते पक्षः सुराणां हि[13] महाऽऽत्मनाम्[14] ।
१६] अ-धर्मो रक्षसां पक्षः सुराणाम् एष निश्-चयः[15] ॥१५॥ [१३
१७उ] धर्मो[16] वै ग्रसतेऽधर्मं तत्र त्रेता प्र-वर्तते । [१४उ
स त्वया चरता लोके धर्मो विनि-हतः पुरा ।
१८] अ-धर्मः प्र-गृहीतश् च[17] तेनाऽसि तमसाऽऽवृतः ॥१६॥ [१५

---

१. ब-राघवबलं । २. प्र-तावुभौ ॥ ३. रा$_1$ ल$_2$ भ प्र-पुरः । ल$_1$ ब-पुनः ॥ ४. रा$_2$-विद्यास्वतिवि० । ५. म-राजन० । ६. रा$_2$ फ म-स शास्ति । ७. म-स्थिरं ॥ ८. रा$_2$ फ म-वारिभिः ॥ ९. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब भ प्र-भवतश्चाप्यहं वेद्मि युद्धे सत्य-पराक्रमान् । युद्धे नाम रिपोस् तन्त्रमित्युक्ता(?क)स्ते क्रियान्वितः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-अगमंस् ॥ ११. म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब भ-धर्मे । १३. ब भ-एष निश्चयः । १४. फ-नास्ति । १५. भ फ-नास्ति ॥ १६. फ म-अधर्मो । १७. म-०हीतेन ॥

१९पू] स प्र-सादाद् वि-वृद्धश् च धर्मो राम-व्यपाऽऽश्रयः ।
वि-वर्धयति तत् पक्षं स सुराणां शुभाऽऽवहः ॥१७॥ [१६
२०] विषयेषु प्र-सक्तेन यत्-किंचित्-कारिणा त्वया ।
ऋषीणाम् अग्नि-कल्पानाम् उद्-वेगो जनितो महान् ॥१८॥ [१७
२१] ते सम्प्रति दुरा-धर्षाः प्र-दीप्ता इव पावकाः ।
तपसा भाविताऽऽत्मानो धर्मस्याऽनु-ग्रहे स्थिताः ॥१९॥ [१८
२२] अ-विघ्नेन यजन्ते च यज्ञैः स्वैः-स्वैर् द्वि-जातयः ।
जुह्वत्य् अग्नींश् च विधि-वद् वेदांश् चोच्चैर् अधीयते ॥२०॥ [१९
२३] अभि-भूय च रक्षांसि ब्रह्म-घोषो नि-नोदयन् ।
दिशोऽपि प्रथते सर्वाः स्तनयित्नुर् इवोष्ण-गे ॥२१॥ [२०
२४] ऋषीणाम् अग्नि-शरणेष्व् अग्निहोत्र-समुत्थि(द्-स्थि)तः ।
आ-दत्ते रक्षसां तेजो धर्मौघो व्य्-आप्नुवञ् जगत् ॥२२॥ [२१
२५] तेषु तेषु च देशेषु पुण्येषु सु-दृढव्रतैः ।
क्रियमाणं तपस् तीव्रं सं-तापयति राक्षसान् ॥२३॥ [२२
२६] उत्-पातान् उत्थि(द्-स्थि)तान् दृष्ट्वा सु-घोरान् बहु-धा बहून् ।[12]
वि-नाशम् अनु-पश्यामि सर्वेषां रक्षसाम् अहम् ॥२४॥ [२५
२७] खराऽभिस्तनिता घोरा मेघा भृश-भयंकराः ।
२८पू] शोणितेनाऽभि-वर्षन्ति लङ्काम् उष्णेन सर्व-तः ॥२५॥ [२६
३०पू] चरतां वाहनानां च प्र-पतन्त्य् अश्रु-बिन्दवः । [२७पू
N] अ-यथावच् च शोभन्ते न सङ्ग्रामाऽभिनन्दिनः ॥२६॥[14] [N

---

१. रा$_1$-उद्योगो ॥ २. ब प्र रा$_2$ फ म-रताः ॥ ३. रा$_2$-यज्ञैस्तैस्तैर् । ४. म-उदीरयन् ॥ ५. रा$_1$ ब-०षोनुनाद० । ६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-व्यथितास्सर्वास्तेन जिष्णुरिवोदितः ॥ ७. रा$_1$ ल$_1$ ल$_2$ अ प्र-०शरणे ह्यग्निहोत्रसमन्वितः । ब-०शरणे साग्निहोत्रसमन्वितः । ८. ल$_2$-आधत्ते । ९. रा$_2$ फ म-धूमौघो । १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-व्यप्लुवज् ॥ ११. रा$_2$ फ म-चीयमानं ॥ १२. रा$_2$ फ म-उत्पातांश्चोद्गतान् दृष्ट्वा घोरान्बहुविधान् बहून् ॥ १३. रा$_2$ फ म-प्रतिभयं० ॥ १४. रा$_2$ फ म-नास्ति ॥

३०उ] रजो-ध्वस्ता दिशः सर्वा न प्र-भान्ति यथा पुरा । [२७उ
३१पू] सर्वं नष्ट-श्रियं मन्ये सैन्यं ते राक्षसेश्वर ॥२७॥ [N
३२उ] विष्णुं रामम् अहं मन्ये मानुषं देहम् आ-श्रितम् ।
न च मानुष-मात्रो वै राघवो दृढ-विक्रमः ॥२८॥ [N
३३] येन बद्धः सम्-उद्रेऽस्मिन् स सेतुः सु-महाऽद्भुतः ।
३४पू] कुरुष्व नर-राजेन सन्धिं रामेण रावण ॥२९॥ [N
N] कुरुष्व वचनं मेऽर्थं हितम् उक्तं निशा-चर ।
३४उ] सीता-कृते महा-प्राज्ञ महद् भयम् उप-स्थितम् ॥३०॥ [N
तथेमानि नि-मित्तानि लक्ष्यन्ते राक्षसाऽधिप । [N
N] चण्डा गोमायवो गृध्रा वाशन्ति च सु-भैरवम् ।
प्र-विश्य लङ्कां समये समवायांश् च कुर्वते ॥३१॥ [२८
३७] काली स्त्री पाण्डुरैर् दन्तैः प्र-हसत्य् अग्र-तः स्थिता ।
स्त्रियः स्वप्नेषु मुष्णन्ति(?न्ती)गृहाणि प्रति-धावति ॥३२॥ [२९
३८] रथ्यासु बालकैर् नित्यं कलहः परि-षज्यते । [N
गृहेषु बलि-कर्माणि प्रेताः पर्युप-भुञ्जते ॥३३॥
३९] खरा गोषु प्र-जायन्ते मूषका नकुलेषु च । [३०
मार्जारा द्वीपिभिः सार्धं सूकराश् च श्वभिः सह ।
४०] किं-नरा राक्षसांश् चैव समेता मानुषैः सह ॥३४॥ [३१
पाण्डुरा रक्त-पादाश् च विह-गाः काल-चोदिताः ।
४१] राक्षसानां वि-नाशाय कपोता गृह-चारिणः ॥३५॥ [३२

---

१. रा₂ फ म-ध्वजा ध्वस्ता विवर्णाश्च । २. प्र-नास्ति ॥ ३. प्र-आस्थितं । ४. रा₂ फ-न स मानु० । म-स त्वमा० ॥ ५ रा₁ ल₁ ल₂ ब ग्र प्र-सेतुः स महदद्भुतः ॥ ६. रा₁ ल₁ ल₂ ग्र-मत्यं ॥ ७. प्र-तेषां यानि । ८. रा₂फ म-लक्षये राक्षसेश्वर ॥ ९. प्र-भिक्षाः—मुष्णन्ति ॥ १०. रा₂ फ म-नास्ति ॥ ११. ल₂-परिष्वज्यते । प्र-प्रतिसज्यते । रा₂ फ म-परिकल्प्यते । १२. रा₁ ल₁ ल₂ ब ग्र प्र-एवोपभुञ्जते ॥ १३. रा₁ ल₂ ग्र-मेषेषु जा० । ल₁ ब प्र-मेषीषु जा० । १४. ल₁ ब प्र-नकुलीषु । १५. प्र-राक्षसैश् । १६. ब-नास्ति ॥

चीची कूची च वाशन्ति शारिका वेश्मसु स्थिताः । [३३
४२] पतन्ति व्यथिताश् चैव निर्-गताः कलहैषिणः । [३४पू
N] मूषिकाश् चाऽपि रथ्यासु वि-श्रब्धं प्र-सरन्ति च॥[4] ३६॥ [N
करालो वि-कटो मुण्डः पुरुषः कृष्ण-पिङ्गलः ।
४३] रक्षो-गृहाणि सर्वाणि कालेः कालेऽन्ववेक्षते ॥३७॥ [३५
अत्य्-उग्रं हि प्र-वाशन्ति द्वि-जा युद्धाऽभिनन्दिनः ।
४५] क्रव्याऽदा भक्षयिष्यन्ति मांसानि गज-वाजिनाम्॥३८॥ [३६
इदं वचस् तस्य नि-वेद्य माल्य-वान्
निर्-ईक्ष्य रक्षोऽधिपतेः स्थितोऽग्र-तः ।
अनुत्-तमम् उत्तम-पौरुषो बली
४६] बभूव तूष्णीं समवेक्ष्य रावणम् ॥३९॥ [४१
स तद् वचो माल्य-वता सु-भाषितं
दशाऽऽननो न प्र-शशंस मौर्ख्य-तः ।
भृशं जगर्हैव सुदुष्ट-मानसो
N] मुमूर्षुर् अन्यच् च वचोऽभ्युद्-ईरयन् ॥४०॥[14] [४२

इत्यार्षे रामायणे युद्ध-काण्डे माल्यवद्-वाक्यं
नामैकादशः सर्गः ॥११॥

१. रा$_2$ फ-कूचीति । २. रा$_2$-भचन्ति । ३. रा$_2$ फ म-निर्जिताः । ४. रा$_2$ फ म-नास्ति ॥ ५. फ-कानि । ६. रा$_2$-काले त्ववे० । म-काले ह्यवे० ॥ ७. ल$_1$-अभ्यग्रं । ८. रा$_2$ फ म-प्रपश्यन्ति ॥ ९. रा$_2$ फ म-तत्र ॥ १०. म-मान्यतयाभिभाषितं । ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-मूर्खवत् । १२. प्र-जगर्हे सुदृढबद्धमानसो । १३. रा$_1$ ल$_2$ अ प्र-वचोभ्यधासीत् । १४. ल$_1$ ब-नास्ति ॥ १५. ल$_2$ ब प्र-लंकाकांडे । रा$_2$ म-लंकापर्वणि । १६. म-माल्यवद्वचो ॥

ततो माल्य-वतो वाक्यं हितम् उक्तं दशाऽऽननः ।
१.] नाऽ[1]मर्षयत दुष्टाऽऽत्मा कालस्य वशम् आ-गतः ॥१.॥ [१.
स बद्ध्वा [2]भ्रुकुटीं [3]चक्रे क्रोधस्य प्रति-लक्षणम् ।
२] अ-मर्षात् परिवृत्ताऽक्षो माल्य-वन्तम् अथाऽब्रवीत् ॥२॥ [२
हित-बुद्ध्या यद् अप्य् एतत् तत्-पौ[4]रुषम् इहो[5]च्यते ।
३] पर-पक्षं प्र-शस्यैव न तच् छ्रो[6]त्र-सुखं मम ॥३॥ [३
मानुषं कृपणं रामम् एकं शाखामृगाऽऽश्रयम् ।
४] सम्-अर्थं मन्यसे केन त्यक्तं पित्रा वनाऽऽल[7]यम् ॥४॥ [४
रक्षसाम् ईश्वरं मां च देवतानां भयं-करम् ।
५] अ-हीनं मन्यसे केन हीनं मां जं(?जा)तु वि[8]क्रमैः ॥५॥ [५
वीर-[9]द्वेषेण वा सन्धेः पक्ष-पातेन वा रिपोः ।
६] त्वयाऽहं परुषाण्य् उक्तः पर-प्रोत्[10]साहितेन [11]वा ॥६॥ [६
प्र-भवन्तं पद-स्थं हि प[12]रुषं कोऽभि-धा[13]स्यति ।
७] पण्डितः शास्त्र-तत्त्व-ज्ञो विना प्रोत्साहनाद् रिपोः ॥७॥ [७
आ-दाय च वनात् सीतां पद्म-हीनाम् इव श्रियम् ।
८] किम्-अर्थं प्रति-दास्यामि राघवाय भयाद् अह[14]म् ॥८॥ [८
वृतं वानर-कोटीभिः स-सुग्रीवं स-लक्ष्मणम् ।
९] पश्य कैश्-चिद् अहोभिस् [15]त्वं नि-हतं राघवं मया ॥९॥[16] [९

---

१. प्र-न मर्षयति ॥ २. रा₂-भ्रुकुटिं चक्रे । ३. रा₁ ल₁ ल₂ ब भ फ-०त्तास्यो । म-०त्तात्मा ॥ ४. प्र रा₂ फ म-पुरुषं । ५. प्र- तदिष्यते । ६. म-चैव सुखं ॥ ७. रा₂-वनाश्रयं ॥ ८. रा₂ फ म-सत्त्ववि० ॥ ९. प्र-वीरदोषेण । १०. प्र-यदत्रोत्सा० । ११. रा₂-च ॥ १२. रा₁ ल₁ ल₂ ब भ प्र-पुरुषं । १३. ल₁ ल₂ ब भ प्र-को हि भ्राम्यति ॥ १४. रा₂ म-द्य ॥ १५. रा₂-तं । १६. भ-नास्ति ॥

द्वन्द्वे यस्य न तिष्ठन्ति[1] देवता अपि सं-युगे ।
१०] रावणो मानुषं प्राऽऽप्य भयम् आ-हारयेत् कथम् ॥१.०॥ [१.०
द्वि-धा भज्येयम्[2] अप्य् एव न नमेयं तु कर्हि[3]-चित् ।
११] एष सह-जो दोषः[4] स्व-भावो दुर्-अतिक्रमः ॥१.१॥ [१.१
१२पू] यदि तावत् सम्-उद्रस्य सेतुर् बद्धो यद्-ऋच्छया ।
N] रामेण वि-स्मयः कोऽत्र यतस् ते भयम् आ-गतम् ॥१.२॥ [१.२
कामं राम[5] इहोत्-तीर्ण(?र्णः) सह वानर-सेनया ।
१३] प्रति-जानामि सत्यं[6] ते न जीवन् प्रति-यास्यति ॥१.३॥ [१.३
एवं ब्रुवाणं सं-रब्धं[7] क्रुद्धं वि-ज्ञाय रावणम् ।
१४] व्रीडितो माल्य-वांस् तूष्णीं तस्माद् देशाद् अपाऽक्रमत् ।१.४। [१४
जयाऽऽशिषा च राजानं वर्धयित्वा वि-मृश्य च ।
१५] माल्य-वान् अभ्यनु-ज्ञातो जगाम स्वं नि-वेशनम् ॥१.५॥ [१.५
रावणस् तु सहाऽमात्यैर् मन्त्रयित्वा वि-मृश्य[8] च ।
१६] लङ्कायाम् अ-तुलां गुप्तिं कारयामास राक्षसः[9] ॥१.६॥ [१.६
प्र-हस्तं चाऽऽदिदेशाऽथ पूर्व-द्वारेऽरि-सूदनम् ।
१७] दक्षिणे तु[10] महा-वीर्यौ महापार्श्व-महोदरौ ॥१.७॥ [१.७
पश्चिमे तु तथा द्वारे[11] पुत्रम् इन्द्र-जितं स्वयम् ।
१८] व्या-दिदेश महा-कायं[12] राक्षसैर् बहुभिर् वृतम् ॥१.८॥ [१८
उत्-तरेऽपि च स द्वारे व्या-दिश्य शुक-सारणौ ।
१९] स्वयम् अत्र भविष्ये[13]ऽहम् इति तान् मन्त्रिणोऽब्रवीत् ॥१.९॥ [१९
राक्षसं तु विरूपाऽक्षं महा-बल-पराक्रमम् ।

---

१. ब्र-किमर्थं प्रतितिष्ठन्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब्र-भजेयमो वा मां । ३. रा$_2$ फ म-कस्यचित् । ४. रा$_1$ ल$_1$ ल$_2$ ब ब्र-द्वेषः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-रामं । ६. रा$_2$ फ म-तत्सत्यं ॥ ७ रा$_1$ ल$_2$-प्रीतार्थं । ल$_1$ ब ब्र प्र-सेनास्थं । म-तर्जन्तं ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-विसृज्य । ९. रा$_1$ ल$_1$ ल$_2$ ब ब्र-रावणः ॥ १०. प्र-तौ ॥ ११. रा$_1$ प्र-महाद्वारे । १२. रा$_2$ फ म-महामात्यं ॥ १३. प्र म-भविष्यामि ॥

२०] मध्ये सं-स्थापयमास बहुभिः सह राक्षसैः ॥२०॥ [२०
एवं वि-धानं लङ्कायां कृत्वा राक्षस-पुङ्गवः ।
२१] मेने कृताऽर्थम् आत्मानं कृताऽन्त-वशम् आ-गतः ॥२१॥ [२१
वि-सर्जयामास ततः स मन्त्रिणो
वि-धानम् आ-ज्ञाप्य पुरस्य पुष्कलम् ।
जयाऽऽशिषा मन्त्रि-जनेन पूजितो
२२] जगाम सोऽन्तः-पुरम् ऋद्धि-मत् तदा ॥२२॥ [२२

इत्यार्षे रामायणे युद्ध-काण्डे लङ्का-विधानं नाम द्वादशः सर्गः ॥१२॥

---

[वं-१३]= **[ त्रयोदशः सर्गः ]** =[दा-३७]

नर-वानर-राजौ तु स च वायु-सुतः कपिः ।
१] जाम्ब-वान् ऋक्ष-राजश् च रावणाऽवरजस् तथा ॥१॥ [१
२पू] अङ्ग-दो द्वि-विदो मैन्दो लक्ष्मणो नील एव च । [२
N] अन्ये च वानर-श्रेष्ठाः शत-शोऽथ सहस्र-शः । [N
अमित्र-विषयं प्राऽऽप्ताः समम् एवाऽभ्य्-अमन्त्रयन् ॥२॥ [३उ
४] इयं सा लक्ष्यते लङ्का पुरी रावण-पालिता ।
५पू] मानुषाऽसुर-गन्धर्वैर् अ-मरैर् अपि दुर्-जया ॥३॥ [४
N] पुर्याम्(?र्या) एवं-विधायां(?यास्) तु मन्त्रयध्वं विनिर्-जये ।
५उ] नित्यं संनि-हितो यत्र रावणो रावयन् प्र-जाः ॥४॥ [५
६उ] तथा तेषु ब्रुवाणेषु रावणाऽवरजोऽब्रवीत् ।
वाक्यं हेत्वर्थ-संयुक्तं पुष्कलाऽर्थं वि-भीषणः ॥५॥ [६

---

१. फ-कृतार्थं मन्यसे च त्वं ॥ २. ल$_2$ म-दुष्करं ॥ ३. फ-नास्ति । ४. ल$_1$ क प्र-लंकाकाण्डे । म-लंकापर्वणि ॥ ५. रा$_1$ ल$_1$ ल$_2$ व क प्र-०राजानौ ॥ ६. रा$_1$ ल$_1$ ल$_2$-वानराः श्रेष्ठाः । ७. रा$_2$ फ-नास्ति ॥ ८. म-अमरैश्चापि ॥ ९. रा$_2$-०तो यत्र । म-शापविहितोत्र । १०. फ- रञ्जयन् ॥

८] अनलश् च हरश् चैव सं-पातिः प्र-घसम् तथा ।
९उ] गत्वा लङ्काम् अमात्या मे पुरीं पुनर् इहाऽऽगताः ॥६॥ [७
भूत्वा शकुनयः सर्वे प्र-विष्टास् तां महा-पुरीम् ।
१०] वि-धानं वि-हितं यच् च दृष्ट्वा तत् समुप-स्थिताः ॥७॥ [८
सं-विधानं यद् आहुस् ते रावणस्य दुर्-आत्मनः ।
११] राजंस् तैः कथितं सर्वं यथा-तथ्यं तु तच् छृणु ॥८॥ [९
पूर्वं प्र-हस्तो बल-वान् द्वारम् आ-सृत्य तिष्ठति ।
१२] दक्षिणं तु महा-वीर्यौ महापार्श्व-महोदरौ ॥९॥ [१०
१३पू] इन्द्र-जित् पश्चिमं द्वारं राक्षसैर् बहुभिर् वृतः ।

N] पट्टिशाऽसि-भुशुण्डीभिः शूल-मुद्गर-पाणिभिः ॥१०॥[5] [N
१३उ] नाना-प्रहरणैः शूरैर् आ-स्थितो रावणाऽऽत्मजः । [११उ

१४] उत्-तरं नगर-द्वारं रावणः स्वयम् आ-स्थितः ॥११॥ [१२
विरूपाऽक्षस् तु महता शूल-शक्ति-धनुष्-मता ।
१५] बलेन राक्षसैः सार्धं मध्यमं गुल्मम् आ-श्रितः ॥१२॥ [१३
एताम् एवं-विधां गुप्तिं लङ्कायां समुद्-ईक्ष्य ते ।
१६] मामकाः सचिवाः सर्वे शीघ्रं पुनर् इहाऽऽगताः ॥१३॥ [१४
सहस्रं कुञ्जराणां च रथानाम् अ-युतं तथा ।
१७] हयानां चाऽयुतं तत्र साऽग्रा कोटी च रक्षसाम् ॥१४॥ [१५
वि-क्रान्ता लब्ध-लक्ष्याश् च सं-ग्रामेष्व् अ-निवर्तिनः ।
१८] इष्टा राक्षस-राजस्य नित्यम् एते निशा-चराः ॥१५॥ [१६
एकैकस्य तु युद्धाऽर्थे रा(?र)क्षसां च विशां-पतेः ।
१९] परिवार-सहस्राणां सहस्रम् उप-तिष्ठते ॥१६॥ [१७

१. रा$_1$ ल$_1$ ल$_1$ ब अ प्र-प्रसृपस् ॥ २. रा$_1$ ल$_1$ ल$_2$ ब अ म-न्ते । ३. रा$_2$ फ-०तत्त्वं ॥ ४. म-सह । ५. रा$_1$ ल$_1$ ल$_2$ ब अ फ-नास्ति ॥ ६. प्र-सर्वैर् । ७. अ प्र रा$_2$ फ-आस्थितः । ८. म-नास्ति ॥ ९. प्र-लंकायाः । १०. रा$_2$ फ-कामगाः ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र म-०लक्षाश् ॥ १२. रा$_2$ फ म-राक्षसस्य ॥

एतां प्र-वृत्तिं लङ्कायाम् अनु-श्रोच्य वि-भीषणः । [१.८पू
२०] रामं कमल-पत्राऽक्षम् इदं पुनर् उवाच ह ॥१.७॥ [१९पू
कुबेरं तु यदा राजन् रावणः प्रत्य्-अयुध्यत ।
२१] षष्टि-शत-सहस्राणि तदा निर्-यान्ति रक्षसाम् ॥१.८॥ [२०
परा-क्रमेण वीर्येण तेजसा सत्त्व-गौरवात् ।
२२] सदृशानि स्म सर्वाणि रावणस्य दुर्-आत्मनः ॥१.९॥ [२१
अत्राऽमर्षो न कर्तव्यो रोषये त्वां न भीषये ।
२३] सम्-अर्थो ह्य् असि वीर्येण सुराणाम् अपि शातने ॥२०॥ [२२
तद् भवान् हरि-वर्याणां बलेन महताऽऽवृतः ।
२४] सं-क्षोभ्य राक्षसीं सेनां सं-वधिष्यति रावणम् ॥२१॥ [२३
रावणाऽवरजे वाक्यम् एवं ब्रुवति राघवः ।
२५] शत्रूणां प्रति-घाताऽर्थम् इदं वचनम् अब्रवीत् ॥२२॥ [२४
कपीनाम् उग्र-वीर्याणां सहस्रैर् बहुभिर् वृतः । [२५उ
२६] नीलः प्र-हस्तं प्लव-गो राक्षसं प्रति धावताम् ॥२३॥ [N
अङ्ग-दो वालिनः पुत्रो बलेन महताऽऽवृतः ।
२७] दक्षिणे बाधतां द्वारि महापार्श्व-महोदरौ ॥२४॥ [२६
हनु-मान् पश्चिमं द्वारं निर्-यातु पवनाऽऽत्मजः ।
२८] इन्द्रजित्-प्रतियुद्धाऽर्थं वृतो वै वानरैः सह ॥२५॥ [२७

---

१. रा$_1$ ल$_1$ ल$_2$ ब प्र-०शोध्य । अ-०शोच्य ॥ २. म-च । ३. रा$_1$ ल$_1$ ल$_2$ ब अ-षष्टिः शतसहस्राणां ॥ ४. प्र-नास्ति ॥ ५. रा$_2$ फ म-अत्र मन्युर् । ६. फ-न विभीषये । ७. ल$_1$-०णामपि शांतये । ब-तेजसा सत्त्वगौरवात् ॥ ८. रा$_2$ फ म-०वीराणां । ९. रा$_2$ फ म-विक्षोभ्य । १०. प्र-महतीं । ११. रा$_2$ फ-तं वधि० ॥ १२. ल$_1$ ब-नास्ति ॥ १३. प्र-हव घा० । रा$_2$ फ-प्रतिबाधार्थं । १४. रा$_2$ फ-एवं ॥ १५. रा$_1$ ल$_2$ अ प्र-प्रवरं प्लवंगो । १६. रा$_1$ ल$_2$ अ प्र- राक्षसं प्रति ॥ १७. रा$_2$ फ म-धावतां ॥ १८. रा$_2$ फ म-निपीड्य । १९. रा$_2$ फ-निविशत्वप्रमेयात्मा कपिभिर्बहुभिः सह । म-नास्ति ॥

दैत्य-दानव-संघानाम् ऋषीणां च महाऽऽत्मनाम् ।
२९] विप्रकार[1]-प्रियः क्षुद्रो वरदान-बलाऽन्वितः ॥२६॥[2] [२८
परा-क्रमति यः सर्वाल् लोकान् सं-तापयन् प्र-जाः ।
३०] तस्य राक्षस-राजस्य रावणस्य वधे धृतः ॥२७॥ [२९
उत्-तरं नगर-द्वारम् अहं सौमित्रिणा सह ।
३१] नि-पीड्योप-निवे[3]क्ष्यामि स-बलो यत्र रावणः ॥[4]२८॥ [३०
वानरेन्द्रस् तु बल-वान् ऋक्ष-राजस् तु जाम्ब-वान् ।
३२] राक्षसेन्द्राऽनुजश् चैव गुल्मे भवतु मध्यमे ॥२९॥ [३१
न चैव मानुषं रूपं कपिभिः कार्यम् आ-हवे ।
३३] [दृष्ट्वा न[5]श्येत वै[6] संज्ञा युद्धे वा मानुषे बले । ?] [३२
वानरो ह्य् एव नश् चिह्नं स्व-जनेऽस्मिन् भविष्यति ॥[7]३०॥ [३३
३४] वयं तु भवतां म[8]ध्ये सप्त योत्स्यामहे नराः ।
अहं चैव सह भ्रात्रा[9] लक्ष्मणेनाऽमितौजसा ।
३५] आत्मनः पञ्चम[10]श् चाऽयं सखा मम वि-भीषणः ॥३१॥ [३४
सर्वकार्य-प्रसिद्ध्यर्थम् एवम् उक्त्वा वि-भीषणम् ।
३६] सुवेलाऽऽरोहणे बुद्धिं चकार ल[11]घु-विक्रमः ॥३२॥ [३५
तत[12]ः स रामो महता बलेन
प्र-च्छाद्य सर्वां पृथिवीं महाऽऽत्मा ।
प्रहृष्ट-रूपोऽभि-जगाम लङ्कां

---

१. रा$_1$ ल$_1$ ब श्म प्र-विप्रकारी च यः । २. ल$_2$-नास्ति ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब श्म प्र-०वेश्यामि । ४. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब श्म प्र-तान्पुरद्वाःस्थितान्शक्तः समर्थः परिरक्षितुं । रामेणाधिष्ठितं चैतद्दृश्यतेनेव सागरं ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब श्म प्र-नश्यति । ६. रा$_2$ म-पुरुषं संज्ञेयं वानरे । फ-पुरुषः संज्ञेयं वानरे । ७. रा$_1$ ल$_1$ ल$_2$ ब श्म प्र म-नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब श्म प्र-भवंतो मध्ये च । ९. प्र रा$_2$ फ-आत्मना । १०. प्र-पंचमोयं मे ॥ ११. प्र रा$_2$ फ म-मतिमांस्तदा ॥ १२. म-तेन ।

N] वि-भीषणं चार-विधौ नि-योज्य ॥३३॥[1] [३६

इ[2]त्यार्षे रामायणे युद्ध-का[3]ण्डे विभा[4]ग-चिन्ता नाम त्रयोदशः सर्गः ॥१३॥

## [ वं-१४ ]= [ चतुर्दशः सर्गः ] =[ दा-३८ ]

स तु कृत्वा सु-वेलस्य बुद्धिम् आ-रोहणं प्रति ।
१] लक्ष्मणाऽनु[5]गतो रामः सु-ग्रीवम् इदम् अब्रवीत् ॥१॥ [१
वि-भीषणं च धर्म-ज्ञम् अनु-रक्तं निशा-चरम् ।
२] मन्त्र-ज्ञं च कृत-ज्ञं च मधुरं श्लक्ष्णया गिरा ॥२॥ [२
सु-वेलं साधु शैलेन्द्रम् आशु सानु-शतैश्[7] चितम् ।
३] अधि-रोहामहे सर्वे वत्स्यामोऽत्र निशाम् इमाम् ॥३॥ [३
लङ्काम् आ-लोकयिष्यामो नि-लयं रावणस्य च ।
४] येना[8]ऽऽत्म-जीविताऽन्ताय हृता भार्या यशस्विनी ॥४॥ [४
येन धर्मो न वि-ज्ञातो न कुलं कुल-शालिना ।
५] रा[9]क्षस्या नीचया बुद्ध्या येनैतद् गर्हितं कृतम् ॥५॥ [५
तस्माद् वि-वर्धते रोषः स्मृ[10]त्वैतं पाप-राक्षसम् ।
६] यस्याऽप-चारा[11]न् नीचस्य सर्वान् ध[12]क्ष्यामि राक्षसान् । [६
बाणैर् वज्राऽशनि-प्रख्यैर् अ-सुरान् इव वासवः ॥६॥ [N
७] एकश् च कु[13]रुते पापं का[14]ल-पाश-वशं गतः ।
नीच[15]स् तस्याऽप-चारेण कुलं येन वि-नश्यति ॥७॥ [७
८] एवं सं-मन्त्र्य काकुत्स्थः सं-क्रुद्धो रावणं प्रति ।

---

१. ल₂-नास्ति ॥ २. फ म-नास्ति । ३. ब अ प्र-लंकाकांडे । म-लंकापर्वणि । ४. रा₂ फ-सैन्यप्रभागो । म-सैन्यविभागो ॥ ५. रा₂ फ म-०नुमतो ॥ ६. रा₂ फ म-इमं । ७. रा₂-सानुशतान्वितं । फ-सानुशतोच्छ्रितं ॥ ८. रा₂ फ म-येन मे जीवि० ॥ ९. प्र-रक्षसा ॥ १०. रा₁ ल₁ ल₂ अ-श्रुत्वैतं । ११. रा₂ म-०पराधान् । १२. रा₁ ल₁ ल₂ अ प्र-हन्यामि ॥ १३. रा₁ ल₁ ल₂ ब अ प्र-को हि तत्कुरुते । १४. रा₁, ल₁ ल₂ अ प्र-कालस्य वशमात्मनः । ब-कालस्य वशमागतः । म-कलहस्य वशं गतः । १५. रा₁ ल₁ ल₂ ब अ प्र-नीचस्यात्माप० ॥

शीघ्रं सु-वेलम् आऽरोहद् वासाऽर्थं चित्र-काननम् ॥८॥ [८
१०] पृष्ठ-तो लक्ष्मणश् चैनम् अन्व्-अगच्छत् समा-हितः ।
स-शरं धनुर् उद्-यम्य सु-महद् वि-क्रमोपमम् ॥९॥
११] अन्वाऽरोहच् च सु-ग्रीवः साऽमात्यः स-विभीषणः । [९
हनु-मान् अङ्ग-दो नीलो मैन्दो द्वि-विद एव च ॥१०॥
१२] गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः । [१०
१३पू] पनसः कु-मुदश् चैव पृथुश् च हरि-यूथपः ॥११॥ [११पू
१४उ] एते चाऽन्ये च बहवो वानराः शीघ्र-गामिनः । [१२उ
अन्वाऽरोहन् बलोदग्राश् चालयन्तो महा-शिलाः ॥१२॥ [N
१५] ततः सु-वेलम् आ-रुह्य रामस् तैर् वानरैः सह ।
नि-षसाद गिरेस् तस्य शृङ्गे सम-शिला-तले ॥१३॥ [१४
१६] ततः कपि-गणाः सर्वे समा-स्तृत्य त्रि-योजनम् ।
आ-रोहन्ति सु-वेलं तु प्लवन्तो दक्षिणा-मुखाः ॥१४॥ [१५
१७] ते वायु-वेगाः प्लव-गास् तं गिरिं गिरि-चारिणः ।
अभ्याऽरोहन्त श-तशः सु-वेलं यत्र राघवः ॥१५॥ [१३
१८] ते त्व् अ-दीर्घेण कालेन गिरिम् आ-रुह्य सर्व-तः ।
ददृशुः शिखरात् तस्माद् वि-भक्ताम् इव खे पुरीम् ॥१६॥ [१६
१९] तां सु-वर्मा वरै-द्वारां प्राकार-वर-शोभिताम् ।
२०उ] लङ्कां राक्षसैः पूर्णां ददृशुर् हरि-यूथपाः ॥१७॥ [१७
प्राकार-वलभी-संस्थैस् तमो-नीलैर् निशा-चरैः ।
२२] ददृशुस् ते हरि-श्रेष्ठाः प्राकारम् अपरं कृतम् ॥१८॥ [१८

---

१. रा$_2$ फ-रामः ॥ २. रा$_2$ फ म-लक्ष्मणस्त्वेनं ॥ ३. रा$_2$-पवनः । ४. प्र-नास्ति ॥ ५. रा$_2$ फ-शीघ्रविक्रमाः । ६. रा$_2$-अभ्यारोहन् । ७. रा$_2$ फ म-इवोदग्राः शातयन्तो ॥ ८. रा$_2$ फ-०तटे ॥ ९. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सुवेलस्य । १०. म-पतन्तो ॥ ११. फ-सर्वशः । १२. रा$_1$ ल$_1$ ल$_2$ ब-विवरात् ॥ १३. प्र-नवद्वारां ॥ १४. रा$_2$ फ म-प्राकारधरणीसं० । १५. रा$_1$ ल$_1$ ल$_2$ ब-परमं ॥

ते दृष्ट्वा वानराः सर्वे राक्षसान् युद्ध-काङ्क्षिणः ।
२३] ससृजुर् वि-पुलान् नादांस् तत्र रामस्य पश्यतः ॥१९॥ [१९
ततोऽस्तम् अगमत् सूर्यः सन्ध्यया प्रति-रंञ्जितः ।
२४] पूर्ण-चन्द्र-प्रदीपा च क्षपा समभि(?भ्य) वर्तत ॥२०॥ [२०
स-चन्द्र-ग्रह-नक्षत्रं नभोऽदृश्यत सागरे ।
२५] द्वितीयम् इव चाऽऽकाशं स-चन्द्र-ग्रह-तारकम् ॥२१॥ [N
ततः स रामो हरि-वाहिनी-पतिर्
वि-भीषणश् चर्क्ष-पतिश् च जाम्ब-वान् ।
स-लक्ष्मणो यूथपँ-यूथ-संवृतः
N] सुवेल-पृष्ठे न्य्-अवसर्न् यथा-सुखम् ॥२२॥ [२१

ततः सु-वेलस्य गिरेश् च वासं(?से)
शृङ्गे च तस्थौ स हित(? तैः) समेतः ।
सं-भ्राजयन् वै रजनी-मुखे(?खं) तं
N] प्र-भाभिर् ईड्याभिर् अतीऽव भाति ॥२३॥[7] [N
ततः प्र-भाते सचिवांस् तु राघवः
प्र-याणम् आ-ज्ञापयतेत्य् अभाषत ।
प्रवीऽऽक्षमाणस् त्व् अथ दक्षिणा-मुखस्
N] ततश् च लङ्कां ददृशे महा-पुरीम् ॥२४॥[8] N

इत्यार्षे रामायणे युद्ध-काण्डे सु-वेलाऽऽरोहणं नाम चतुर्दशः सर्गः ॥१४॥

[ वं – १५ ]= [ पञ्चदशः सर्गः ] =[ दा – ३९ ]

ते रात्रिम् उषिताः सर्वे सु-वेले हरि-यूथपाः ।
१] लङ्काया ददृशुर् दूराद् वनान्य् उप-वनानि च ॥१॥ [१

१. म-प्रतिरक्षितः । २. प्र-०प्रदीपेव । रा$_2$-०प्रतीपा च । ३. रा$_1$-क्षमा । ४. ल$_2$-०वर्तते । म-०वर्त्तताम् ॥ ५. म-यूथपतिस्तु सं० । ६. रा$_1$ ल$_1$ ल$_2$ ब-न्यवसद् । प्र-त्ववसद् ॥ ७. रा$_2$ फ म-नास्ति ॥ ८. फ म-नास्ति । ९. ब प्र-लंकाकांडे । म-लंकापर्वणि ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब ब्र प्र-रात्रिसुखिताः ॥

सम-भौमानि रम्याणि विशालाऽऽयतनानि च ।
२] दृष्टि-रम्याणि ते दृष्ट्वा बभूवुर् जात-विस्मयाः ॥२॥ [२
चम्पकाऽशोक-बकुल-साल-ताल-वनाऽऽयुता ।
३] तमाल-वन-संच्छन्ना रक्तमालक-संवृता ॥३॥ [३
हिन्तालैर् अर्जुनैः सर्ज्जैः(?र्ज्जैः)सप्त-पर्णैश् च पुष्पितैः ।
४] तिलकैः कर्णिकारैश् च तथा पाटलिभिर् द्रुमैः ॥४॥ [४
५पू] शुशुभे पर्वताऽग्रैश् च लता-परिकरैर् घनैः ।
६पू] लङ्का-काननजैः पुष्पैर् यथेन्द्रस्याऽमरावती ॥५॥ [५
५उ] विचित्र-कुसुमोपेतैं रक्त-कोमल-पल्लवैः ।
६उ] शाद्-वलानि च नीलानि चित्राश् चे वन-राजयः ॥६॥ [६
७उ] जालकं मञ्जरी-पुष्पं फलं किसलयानि च ।
धारयन्ति नगास् तत्र नरा इव वि-भूषणम् ॥७॥ [७
८] तच् चैत्र-रथ-संकाशं मनो-ज्ञं नन्दनोपमम् ।
वनं सर्व-मृगं रम्यं शुशुभे षट्-पदाऽऽकुलम् ॥८॥ [८
९] दात्यूहकैः पक्षि-गणैर् नृत्यमानैश् च बर्हिभिः ।
तथा पर-भृतैश् चैव शुशुभे तद् वनं महत् ॥९॥ [९
१०] तानि मत्त-विहंगानि भ्रमराऽऽचरितानि च ।
कोकिला-कुल-षण्डानि विहंगाऽभिरुतानि च ॥[१७]१०॥ [१०
११] भृङ्ग-राजाऽभिलीनानि कुररी-सेवितानि च ।[१८]
काकोलूक-विघुष्टानि सारसाऽभिरुतानि च ।[१७] [११

१. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-समसौम्यानि । २. रा$_2$ फ म-०लान्यायतानि ॥ ३. रा$_2$ म-०कबहुलां शाल···युतां । ४. प्र-०मालाभिसंयुतां ॥ ५. रा$_2$- हरितालैर् ॥ ६. रा$_2$ फ-द्रुमैः । ७. म-नास्ति । ८. रा$_2$ फ म-फुल्लैर् ॥ ९. म-विचित्रा ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-धारयंत्यङ्गनास् ॥ ११. प्र-तैश् । १२ रा$_2$ फ-सर्वतुंगं ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-दात्यूहकोयष्टिरुतैर् । १४. म-बर्हिणैः ॥ १५. अ प्र-तन्निमित्तवि० । १६. रा$_1$ ल$_1$ ल$_2$ प्र-०भिमतानि ॥ १७, ब-नास्ति ॥ १८. ब अ-नास्ति ।

१.२] विविशुस् ते ततस् तानि हरयः काम-रूपिणः ॥१.१॥ [१२पू
१.३] तेषां नि-वसतां तत्र वानराणां तरस्विनाम्[2] ।
पुष्प-संसर्ग-सुरभिर् ववौ [3]घ्राण-सुखोऽनिलः ॥१.२॥ [१३
१.४] तेषां नि-वेशस् तत्राऽऽसीत् प्रवि-भागैर् अनेक-शः । [N
अकम्पयंस् ते लङ्कां वै स्वैर्[4] नादैर् नदतां वराः ॥१.३॥
१.५] सर्वद्दिश् च महौ-यूथैर्[5] मही चरण-पीडिता । [१५उ
उत्-पपात रजश् चोर्ध्वं कपोताऽङ्ग[6]रुहोपमम् ॥१.४॥ [१६
१.६] अन्ये तु हरि-यूथानां[7] वि-क्रान्ता हरि-यूथपाः ।
सु-ग्रीवेणाऽभ्यनु-ज्ञाता लङ्कां जग्मुः पताकिनीम् ॥१.५॥ [१.४
१.७] वि-त्रासयन्तो वि-हगांस् त्रासयन्तो मृगांस्[8] तथा । [१५पू
आ-स्फोटयन्तो खेलन्तः[9] सर्वे रण-समुत्सुकाः ।
१.८] कम्पयन्तश् च लङ्काया वनान्य् उप-वनानि च ॥१.६॥ [N
ऋक्षाः सिंहा वराहाश् च महिषा भ्रमरा गिराः(?मृगाः) ।[10]
१.९] तेषां शब्देन वि-त्रस्ता जग्मुर्[11] भीतो दिशो दश ॥१.७॥ [१७
शिखरम् तु त्रि-कूटस्य प्रांऽशुर् एको नभः स्पृशन् ।
२०] समन्ताद्[12] द्रुम-संच्छन्नो महा-जलद[13]-सन्निभः ॥१.८॥ [१८[15]
श्वेतश् चोर्ध्वं च वि-स्तीर्णो विमलो[14]ऽऽदित्य-सन्निभः ।
२१] श्लक्ष्णः श्री-मान् महांश् चैव दुष्प्राऽऽपः शकुनैर् अपि ॥१.९॥
मनसाऽपि दुरा[16]-रोहः स शैलः किमु कर्मणा । [१९
२२] नि-विष्टा यस्य शिखरे लङ्का रावण-पालिता ॥२०॥ [२०पू
सा पुरी गो-पुरैश् चित्रैर् विविधा[17]ऽऽकार-तोरणैः ।

---

१. रा$_{2}$ फ म-वनान्युपवनानि च ॥ २. प्र रा$_{2}$ फ-महौजसां । ३. फ-घ्राणसु० ॥ ४. रा$_{2}$फ म-नादैस्तैर् ॥ ५. रा$_{2}$ फ म-तथा यूथैर् । ६. प्र रा$_{2}$ फ म-कपोतारुणसन्निभं ॥ ७. प्र रा$_{2}$ फ म-हरिवीराणां ॥ ८. रा$_{2}$ म-मृग-द्विपान् । फ-मृगद्विजान् । ९. रा$_{2}$-वल्गंतः । १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-नास्ति । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-जग्मुस्तेपि ॥ १२ रा$_{2}$-राजतद्रुम० । १३. रा$_{2}$ फ-०महारजतसं० ॥ १४. म-०लादर्शस० ॥ १५. प्र-नास्ति ॥ १६. प्र-न चारोहः । १७. म-प्राकारैस्तोरणैरपि ।

२३] काञ्चनेन च जालेन राजतेन च शोभते ॥[1]२१॥ [२१
प्रासादैश् च वि-मानैश् च लङ्का परम-शोभिता ।
२४] घनैर् इव तपाऽपाये मध्यमं वैष्णवं पदम् ॥२२॥ [२२
यस्यां स्तम्भ-सहस्रेण प्रासादः सर्व-[2]काञ्चनः ।
२५] कैलास-शिखराऽऽकारो दृश्यते खम् इवोल्[3]-लिखन् ॥२३॥[२३
चैत्यः[4] स राक्षसेन्द्रस्य रावणस्य दुर्-आत्मनः ।
२६] शतेन रक्षसां नित्यं यः[5] सम्-अग्रेण रक्ष्यते ॥२४॥ [२४
तां सम्-ऋद्धां [6]समृद्धाऽर्थो लक्ष्मी-वांल् लक्ष्मणाऽग्रजः ।
२८] रावणस्य पुरीं रामो ददर्श सह वानरैः ॥२५॥ [२७
तां रत्न-पूर्णां बहु-संविधानां ।
प्रासाद-मालाभिर् अलङ्कृतां च ।
पुरीं महा-यन्त्र-कपाट[7]-युक्तां
N] ददर्श रामः [8]सह लक्ष्मणेन ॥२६॥ [२९

इत्यार्षे रामायणे युद्ध-काण्डे लङ्का-दर्शनं नाम पञ्चदशः सर्गः ॥१५॥

## [बं-१६]= [षोडशः सर्गः] =[दा-४१]

अथ तत्र नि-मित्तानि दृष्ट्वा लक्ष्मण-पूर्वजः ।
१] लक्ष्मणं सम्परि-ष्वज्य [12]ततो वचनम् [13]अब्रवीत् ॥१॥ [१
[परि-[11]गृह्योदकं तूर्णं वनानि फलवन्ति च ।
२] बलं[14] च प्रवि-भज्येदं[15] व्यू[16]-ऊहे तिष्ठाम लक्ष्मण ॥२॥ ] [१०

---

१. रा$_1$ ल$_1$ ल$_2$ ब अ-नास्ति॥ २. रा$_2$ फ-समलंकृतः । ३. फ-द्दहोल्लि० । ४. रा$_1$ अ-दैत्यः ॥ ५. म-स यत्नेन च र० ॥ ६. रा$_1$ ल$_2$ ब अ प्र-०द्धार्थां ॥ ७. म-०कपाटगुल्मां । ८. रा$_2$फ म-सहितो बलेन ॥ ९. रा$_1$-सुन्दरकाण्डे । ब अ प्र रा$_2$-लंकाकाण्डे । म-नास्ति । १०. रा$_2$फ-लंकादर्शनो ॥ ११. प्र-नास्ति । १२. रा$_2$ फ ब-वचोवददतन्द्रितः ॥ १३. रा$_2$ फ-प्रविग्रा० । १४. ल$_2$-फलं च । ब-बलानि । १५. रा$_1$ ल$_1$ ल$_2$ ब अ-प्रविसृज्येदं । १६. रा$_2$-ब्रूहि ॥

लोक-क्षय-करं भीमं भयं पश्याम्य् उप-स्थितम् ।
३] नि-बर्हणं सु-वीराणां मृधे पश्यामि रक्षसाम् ॥३॥ [११
वाता हि परुषा वान्ति कम्पते च वसु-धरा ।
४] पर्वताऽग्राणि वेपन्ते नदन्ति धरणी-धराः ॥४॥ [१२
५पू] मेघाः क्रव्यात्-प्रतीकाशाः परुषाः परुष-स्वनाः ।
क्रूरा वारि प्र-वर्षन्ति मिश्रं रुधिर-बिन्दुभिः ॥५॥ [१३
६] रक्त-चन्दन-सङ्काशा सन्ध्या-परम-दारुणा ।
ज्वलन्त्यो नि-पतन्त्य् एव महोल्काः सूर्य-मण्डलात् । [N
N] आदित्य-पथम् आ-वृत्य जनयन्त्यो महद् भयम् ॥६॥
७उ] दीना दीन-स्वना घोरास् त्व् अ-प्रशस्ता मृग-द्विजाः । [१५
रजन्याम् अ-प्रशस्तश् च सं-तापयति चन्द्रमाः ।
८] क्षिप्त-रक्तांऽशु-पर्यन्तो यथा लोकस्य सं-क्षये ॥७॥
ह्रस्वो रूक्षोऽप्रशस्तस् तु परि-वेषश् च लोहितः । [१६
९] आदित्य-मण्डले नीलः पश्य लक्ष्मण दृश्यते ॥८॥
चन्द्रमा न यथा-वच् च नक्ष-त्राण्य् अभि-पद्यते ।
१०] युगाऽन्त इव लोकानां पश्य लक्ष्मण दृश्यते ॥९॥ [१७
कङ्काः श्येनास् तथा गृध्रा नीचैः परि-चरन्ति च ।

१. रा$_2$ फ म-प्रवीराणां मृधे वानरर० ॥ २. फ म-नास्ति ॥ ३. रा$_2$-मेघाः पर० । ४. रा$_1$ ल$_1$ ल$_2$ ब अ-एषु । ५. अतः परमधिकः पाठः—रा$_1$ ल$_1$,ल$_2$ ब अ रा$_2$ फ-ज्वलच्च निपतत्येतदादित्यादग्निमंडलं । म-नास्ति । ६. म-आविश्य । ७. रा$_1$ ल$_1$,ल$_2$ ब अ प्र म-०यन्तो ॥ ८. प्र रा$_2$ फ म-०स्वरा । ९. म-नास्ति । १०. अतः परमधिकः पाठः—म-सैंहिकेयेन च तथा गृहीतौ चन्द्रभास्करौ । अपर्वणि त्रयोदश्यां सपरिवेषमण्डलौ ॥ वक्रमंगारकश्चक्रे विशाखासु सुभैरवं । अशरीरास्तथा वाचो श्रूयन्ते ह्यशुभावहाः । उभे सन्ध्ये च वाशंते क्रव्यादाश्च सुदारुणाः । ११. रा$_1$,ल$_1$,ल$_2$ ब-अप्रमत्तश् । १२. रा$_2$ फ म-कृष्णर० ॥ १३. प्र रा$_2$ फ म-प्रशस्तश्च । १४. रा$_1$-रविवेशश्च लो० । रा$_2$ फ-परिवेषः सुलो० । प्र-परिवेषस्तु लो० । म-परिवेषोस्य लो० । १५. म-लीनः ॥ १६. म-नास्ति ॥ १७. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म-लंकां । १८. म-पतन्ति । १९. प्र-हि ।

११] शिवाश् चाऽप्य् अ-शिवा वाचः प्र-वदन्ति महा-स्वनाः।१०।[१८
तूर्णम् अद्य दुरा-धर्षां पुरीं रावण-पालिताम् ।
१३] अभि-[1]यामो जवेनैव सर्व-तो हरिभिर् वृताः ॥११॥ [२०
इत्य् एवं तु वदन् वीरो लक्ष्मणं लक्ष्मणाऽग्रजः ।
१४] तस्माद् अव-ततारा‌ऽऽशु पर्वताऽग्रान् महा-बलः ॥१२॥ [२१
अव-तीर्य तु धर्माऽऽत्मा तस्माच् छैलात् स राघवः ।
१५] परैर् अ-धृष्यम् अ-क्षोभ्यं ददर्श बलम् आत्मनः ॥१३॥[2] [२२
ततस् तं व्य्-ऊह्य सु-ग्रीवः कपि-राजो महा-बलः ।
१६] काल-ज्ञो राघवस्याऽऽज्ञां युद्धाऽऽकांक्षी भ्युद्-ऐक्षत[3] १४[4] [२३
ततः काले महा-बाहुर् बलेन महताऽऽवृतः ।
१७] प्र-तस्थे पुर-तो धन्वी लङ्काम् अभि-मुखः पुरीम् ॥१५॥ [२४
तं विभीषण-सुग्रीवौ हनु-मान् जाम्ब-वान् नलः ।
१८] ऋक्ष-राजोऽङ्ग-दो नीलो लक्ष्मणश् चाऽन्व्-अयुस् तदा १६[२५
ततः पश्चात् सु-महती पृतनार्क्षवनौकसाम् ।
१९] प्र-च्छाद्य महतीं भूमिं प्र-ययौ येन राघवः ॥१७॥ [२६
शैल-शृङ्गाणि शत-शः प्र-वृद्धांश् च मही-रुहान् ।
२०] जगृहुः कुञ्जर-प्रख्या वानरा वाहु-शालिनः ॥१८॥ [२७
ते त्व् अ-दीर्घेण कालेन राम-सुग्रीव-लक्ष्मणाः ।
२१] रावणस्य पुरीं लङ्काम् आ-सेदुः सुदुरा-सदाम् ॥१९॥ [२८
पताका-मालिनीं रम्याम् उद्यान-[5]वन-शोभिताम् ।

---

१. ब-अभिरामो ॥ २. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-नास्ति ॥ ३. अतः परमधिकः पाठः—रा$_2$ फ-व्यूह्य तद्वानरसैन्यं प्रायाल्लंकां पुरीं प्रति । बद्धगोधांगुलित्राणौ शरचापाऽसिधारिणौ ॥ दिव्यशस्त्रास्त्रसम्पन्नौ आबद्धकवचावुभौ । पुरस्कृत्य महावीर्यौ तावुभौ रामलक्ष्मणौ ॥ विभीषणेनानुगतौ प्रवरैश्च प्लवंगमैः । ततस्तु हेमपिंगानां पृतना सा वनौकसां ॥ समुद्रकल्पा महती लङ्कामभ्यपतत्तदा । म-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब भ प्र म-नास्ति ॥ ५. म-उद्यानशतशो० ।

२२] चित्र-वप्रां सुदुष्प्राऽऽपाम् उच्च-[1]प्राकार-तोरणाम् ॥२०॥ [२९
तां सुरैर् अपि दुष्प्रेक्षां दृष्ट्वा राम-प्रचोदिताः ।
२३] यथा-नि[2]वेशं सम्प्रा[3]ऽऽप्य न्य्-[4]अवसन्त वनौकसः ॥२१॥ [३०
दश-योजन-मात्रं तु [5]मण्डलं वानरं बलम् ।
२४] परि-[6]क्रम्य तदा लङ्कां युद्धायाऽभि-ससार ह ॥२२॥ [N
[7]लङ्काया [8]उत्-तरं द्वारं शैल-शृङ्गम् इवोन्-नतम् ।
२५] रामः सहाऽनुजो धन्वी जुगोप च रुरोध च ॥२३॥ [३१
लङ्काम् उपनि-विष्टे च रामे दशरथाऽऽत्मजे ।
२६] लक्ष्मणाऽनुचरे वीरे व्यथिताः सर्व-[9]राक्षसाः ॥२४॥ [३२
नाऽन्यो रामाद् धि तद् द्वारं सम्-अर्थः परि-रक्षितुम् ।
२८] रावणाऽधिष्ठितं तद् धि वरुणेनेव सागरम् ॥२५॥ [३३
राक्षसैः साऽऽयुधैर् उग्रैर् अभि-[10]गुप्तं समन्त-तः ।
२९] वीर्य-विक्रम-सम्पन्नैः पातालम् इव दानवैः ॥२६॥ [३४
राक्षसैर् विविधाऽऽकारैः [11]शुशुभे सा महा-[12]पुरी ।
३०] [13]समस्तैर् बहुभिर् गुप्ता नागैर् भोग-वती यथा ॥२७॥ [N
वि[14]न्य्-अस्तानि च योधानां बहूनि वि-विधानि च ।
३१] तस्याम् [14]आयुध-जातानि वि-[15]चित्राणि भृशं तदा ॥२८॥ [३५
पूर्वं तु द्वारम् आऽरक्षन् नीलो हरि-चमूपतिः ।
३२] मैन्दश् च द्वि-विदश् [17]चोभौ [18]श्वेतं गिरिम् इवोर-गौ ॥२९॥ [३६

---

१. रा$_1$ ल$_1$ ल$_2$ ब भ-नास्ति ॥ २. म-०निदेशं । ३. प्र-संस्थाप्य । म-संपीड्य । ४. म-निवसन्तो ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब भ प्र फ-मुहूर्ते । ६. रा$_2$ म-परिक्षिप्य ॥ ७. रा$_2$ फ म-लंकायास्तूत्तर ॥ ८. रा$_2$ फ म-त्तु । ९. प्र-सर्वगर्हिताः । रा$_2$ फ म-सर्वनैर्ऋताः ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब-अभिक्षिप्तं ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-०मे सा महाचमूः । म-नास्ति । १२. रा$_2$ फ-समन्ताद् । १३. म-नास्ति ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-चायुध० । १५. रा$_2$ फ म-चित्राणि ददृशे ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-आगम्य । १७. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-चैव । १८. रा$_1$ ल$_1$ ल$_2$ ब भ-यथा । प्र-तथा ॥

अङ्ग-दो दक्षिणं द्वारं जगृहे पृतनाऽन्वितः ।
३३] ऋषभेण गवाऽक्षेण गजेन गवयेन च ॥३०॥ [३७
हनु-मान् पश्चिमं द्वारं ररक्ष बल-वान् कपिः ।
३४] प्र-घसश् च प्र-माथी च यत्राऽस्य सचिवाव् उभौ ॥३१॥ [३८
मध्यमे च स्वयं गुल्मे सु-ग्रीवः सम्-अतिष्ठत ।
३५] सह सर्वैः कपि-श्रेष्ठैः सुपर्ण-सम-विक्रमैः ॥३२॥ [३९
वानराणां तु षट्-त्रिंशत् कोट्यस् तैः सह यूथ-पैः ।
३६] नि-पीड्योपनि-विष्टाश् च सु-ग्रीवो यत्र वानरः ॥३३॥ [४०
शासनाद् एव रामस्य सु-ग्रीवः स-विभीषणः ।
३७] द्वारे द्वारे प्लवं-गानां कोटीं कोटीं न्य्-अवेशयत् ॥३४॥ [४१
पश्चिमेन तु रामस्य सु-ग्रीवः सह-जाम्बवान् ।
३८] अ-दूरे मध्यमे गुल्मे तस्थौ बहु-बलाऽऽवृतः ॥३५॥ [४२
ते तु वानर-शार्दूलाः शार्दूला इव दंष्ट्रिणः ।
३९] गृहीत्वा द्रुम-शैलांस् तु प्र-हृष्टा योद्धुम् उद्-यताः ॥३६॥ [४३
सर्वे विकृत-लाङ्गूलाः सर्वे दन्त-नखाऽऽयुधाः ।
४०] सर्वे विकृत-वर्णाऽङ्गाः सर्वे च विकृताऽऽननाः ॥३७॥ [४४
४१उ] दश-नाग-बलाः केचित् केचिद् दश-गुणोत्तराः ।
केचिन् नाग-सहस्रस्य बभूवुस् तुल्य-विक्रमाः ॥३८॥ [४५
४२] सन्ति मेघ-बलास् तत्र तथा वायु-बलोपमाः ।
अप्रमेय-बलाश् चाऽन्ये तत्राऽऽसन् हरि-यूथपाः ॥३९॥ [४६
४३] अद्भुतश् च वि-चित्रश् च तेषाम् आसीत् समा-गमः ।

---

१. रा$_{2}$ फ-जग्राह । म-ररक्ष । २. रा$_{2}$-०नावृतः । म-बलवान् कपिः ॥ ३. रा$_{2}$ फ म-०र्णश्वसनोपमैः ॥ ४. रा$_{2}$ फ म-अथ । ५. ल$_{1}$ म-नास्ति ॥ ६. ल$_{1}$-सहबान्धवः । ७. बप्र रा$_{2}$ फ म-०बलानुगः ॥ ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब अ प्र-शृंगिणः । ९. प्र-आगताः । १०. म-नास्ति । ११. म-नास्ति ॥ १२. रा$_{1}$ क$_{1}$ ल$_{2}$ ब अ-अत्यद्भुतश्चित्राश्च । रा$_{2}$ फ-अद्भुतश्चैव चित्रश्च ।

तत्र वानर-सैन्यानां शलभानाम् इवोद्-गमः ॥४०॥ [४७
४४] प्रति-पूर्णम् इवाऽऽकाशं प्र-च्छन्नेव च मेदिनी ।
लङ्कां प्रति नि-विष्टैश् च सं-पतद्भिश् च वानरैः ॥४१॥ [४८
४५] शतं शत-सहस्राणां पृथग् ऋक्ष-वनौकसाम् ।
लङ्का-द्वाराण्य् उपाऽऽजग्मुः शत-शस् ते समन्त-तः ॥४२॥ [४९
४६] अन्ये चाऽन्येषु देशेषु संन्य्-अस्ताः सु-महाबलाः । [N
छादयन्तो गिरिं सर्वे सम्-अन्तात् ते वनौकसः । [५०
४७] अयुतानां सहस्रं च लङ्कां समभ्य्-अवर्तत ॥४३॥ [५१
वानरैर् बल-वद्भिश् च बभूव द्रुम-पाणिभिः ।
४८] सर्व-तः सं-वृता लङ्का दुष्प्र-वेशाऽपि वायुना ॥४४॥ [५२
राक्षसा वि-स्मयं जग्मुः सहसैव नि-पीडिताः ।
५०] वानरैर् मेघ-सङ्काशैः शक्र-तुल्य-पराक्रमैः ॥४५॥ [५३
सहस्रैर् बहुभिश् चाऽत्र नील-मेघ-निभैस् तथा ।
५१] गिरि-संहननैश् चैवं वानरैर् आ-वृता दिशः ॥४६॥ [N
लङ्कायाम् अभवच् छब्दो मेघौघस्येव पर्वते ।
४९] सागरस्येव भिन्नस्य यथा स्यात् सलिल-स्वनः ॥४७॥ [५४
निर्-ह्राद इव सं-जज्ञे स बलौघ-स्वनो महान् ।
५२] लङ्कायां शुश्रुवे शब्दः सागरस्येव भिद्यतः ॥४८॥ [N
तेन शब्देन महता स-प्राकारा स-तोरणा ।

---

१. रा$_2$ फ म- संछ० ॥ २. रा$_2$, फ म-अन्ये जग्मुः ॥ ३. प्र-संछादितो गिरिः सर्वस्तैः समन्ताद् वनौकसैः । रा$_2$ फ-आछाद्यत गिरिः सर्वैस्तैः समन्ताद्व-नौकसैः । म-संछाद्य तं गिरिं स० । ४. फ-सहस्रैश् । ५. रा$_1$ ल$_1$ ल$_2$ ब अ-०भिवर्तते । म-अवाभ्यवर्तत ॥ ६. रा$_2$ फ म-सहसा विनिपी० । ७. अ प्र-घोरसं० । ८. प्र रा$_2$ फ म-शक्रवीर्यप० ॥ ९. प्र रा$_2$ फ म-गिरिकूटप्रमाणैश् च ॥ १०. म-अभितः शब्दो । ११. रा$_2$ फ-महौघस्येव । १२. रा$_2$-वर्धतः । म-वर्षतः ॥ १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-सलिलस्च्युतः ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-सबलो यत्र राघवः । १५. रा$_2$ फ म-मथ्यतः ॥

५३] लङ्का प्र-चलिता सर्वा रक्षसाम् आ-गतं भयम् ॥४९॥ [५५
राम-लक्ष्मण-गुप्ता सा सु-ग्रीवेण च वाहिनी ।[2]
५८] बभूव सुदुर्धर्षा सर्वैर् अपि सुराऽसुरैः ॥५०॥ [५६
राघवस् तन् नि-वेश्यैवं सैन्यं स्वं रक्षसां वधे ।
५९] सं-मन्त्र्य मन्त्रिभिः सार्धं निश्-चित्य च पुनः पुनः॥५१॥
आनन्तर्यम् अभिप्रेप्सुः क्रम-योगस्य तत्त्व-वित् । [५७
६०] विभीषण-मते तिष्ठन् राज-धर्मम् अनु-स्मरन् ॥५२॥
अङ्ग-दं वालि-तनयं समा-हूयाऽब्रवीद् वचः । [५८
६१] गच्छ सौम्य दश-ग्रीवं ब्रूहि मद् वचनाद् इदम् ॥५३॥
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गत-व्यथः । [५९
६२] भ्रष्टैश्वर्यं गत-श्रीकं मुमूर्षुं नष्ट-चेतसम् ॥५४॥
ऋषीणां देवतानां च गन्धर्वाऽप्सरसां तथा । [६०
६३] नागानाम् अथ यक्षाणां राज्ञां च रजनी-चर ॥५५॥
यत् त्वयाऽपकृतं मोहाद् अव-लिप्तेन राक्षस । [६१
६४] नूनं तेऽद्य गतो दर्पः स्वयम्भु-वरदान-जः ॥५६॥
तस्य दण्ड-धरस् तेऽहं भार्या-हरण-कर्षितः ।
६५] दण्डं धारयितुं तीव्रं लङ्का-द्वारे व्यव-स्थितः ॥५७॥ [६२
पदवीं देवतानां च महर्षीणां च राक्षस ।
६६] राजर्षीणां च सर्वेषां गमिष्यामि युधि स्थितः ॥५८॥ [६३
छलेन येन मे सीता मायया राक्षसाऽधमे ।
६७] माम् अति-क्रमयित्वा त्वं हृतवांस् तद् वि-दर्शय ॥५९॥ [६४
अ-राक्षसम् इमं लोकं कर्ताऽस्मि नि-शितैः शरैः ।
६८] नो वा शरणम् अभ्य्-एषि माम् उपाऽऽदाय मैथिलीम् ६० [६५

---

१. रा₂ फ म-चागतं ॥ २. फ-नास्ति । ३. रा₂ फ म-दुर्धर्षतमा ॥ ४. रा₂ फ म-०योगार्थत० । ५. रा₂ फ म-विभीषणस्यानुमते ॥ ६. फ-०पहृतं ॥ ७. प्र-धारयति ॥ ८. ल₁ल₂ म-सीतां । ९. प्र-०साधिप । १०. रा₂-अपक्रा० ॥ ११. रा₂ फ म-न चेच्छरणं ॥

लङ्कैश्वर्यं[1] परि-त्यज्य हृत-राज्यो हृताऽऽसनः ।
६९] रक्षस्व जीवितं मूढ मम निर्-यात्य मैथिलीम् ॥६१॥ [N
धर्माऽऽत्मा रक्षसां श्रेष्ठः सम्प्राऽऽप्तोऽयं वि-भीषणः ।
७०] लङ्कैश्वर्यं महद् धी-मान् मद्-गुप्तः पालयिष्यति ॥६२॥ [६६
न हि राज्यम् अ-धर्मेण भोक्तुं क्षणम् अपि त्वया ।
७१] शक्यं मूर्ख-सहायेन धृष्टेना[2]ऽविजिताऽऽत्मना ॥६३॥ [६७
युध्यस्व वा धृतिं कृत्वा शौर्यम् आ-लम्ब्य राक्षस ।
७२] मच्-छरैस् त्वं रणे शान्तस् ततः शान्तिर् भविष्यति[3]॥६४॥[६८
यद्य् आ-विशसि लोकांस् त्रीन् पक्षी भूत्वा मनो-जवः ।
७३] मम चक्षुष्-पथं प्रा[4]ऽऽप्तो नहि जीवन् वि-मोक्ष्यसे ॥६५॥ [६९
ब्रवीमि त्वा हितं वाक्यं क्रियताम् और्ध्व-दैहिकम् ।
७४] सु-दृष्टः क्रियतां लोको[5] जीवितं[6] ते मयि स्थितम् ॥६६॥ [७०
इत्य् उक्तः स तु तारेयो रामेणाऽक्लिष्ट-कर्मणा ।
७५] जगामाऽऽकाशम् आ-विश्य मूर्ति-मान् इव हव्य-वाद्[7] ६७ [७१
सोऽभि-प्लुत्य मुहूर्तेन श्री-मद् रावण-मन्दिरम् ।
७६] ददर्शाऽऽसीनम् अन्त(?:)-स्थं[8] रावणं सचिवैः सह ॥६८॥ [७२
ततस् तस्याऽवि-दूरं[9] सन्[10] नि-पत्य हरिर् आ-प्लुतः ।
७७] दीप्ताऽग्नि-सदृशस् तस्थाव् अङ्ग-दः काञ्चनाऽङ्गदः[11] ॥६९॥ [७३
तद् राम-वचनं सर्वं मन्युनाऽधिकम् उत्-तमम् ।
७८] साऽमात्यं श्रावयामास नि-वेद्याऽधिकम् आत्मना ॥७०॥ [७४
दूतोऽहं कोसलेन्द्रस्य रामस्याऽक्लिष्ट[12]-कर्मणः ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-लोकै० ॥ २. ल$_1$ ब-दृष्टेनाभिजि० । रा$_2$ फ म-हते-नावि० ॥ ३. ब-भविष्यसि ॥ ४. रा$_2$ फ म-प्राप्य ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब-लोके । ६. प्र-जीविते ते मयि स्थिते ॥ ७. रा$_1$ ल$_1$ ल$_2$ ब-०राद् ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब भ रा$_2$ फ-अस्वस्थं ॥ ९. ल$_1$ प्र रा$_2$ म-०विदूरे । १०. ल$_1$ रा$_2$ म-स नि० । प्र-हि नि० । ११. रा$_2$ फ म-कन-कांगदः ॥ १२. रा$_2$ म-०स्याक्लिष्टक० ।

७९] वालि-पुत्रोऽङ्ग-दो नाम यदि ते श्रोत्रम् आ-गतः ॥७१॥ [७५
आह त्वां राघवो रामः कौसल्याऽऽनन्द-वर्धनः ।
८०] स्वयं निर्-उगत्य युध्यस्व नृ-शंस पुरुषाऽधम ॥७२॥ [७६
हन्ताऽहं त्वां सहाऽमात्यं स-पुत्र-भ्रातृ-बान्धवम् ।
८१] निर्-उद्वेगास् त्रयो लोका भविष्यन्ति हते त्वयि ॥७३॥ [७७
देव-दानव-यक्षाणां गन्धर्वोरगा-पक्षिणाम् ।
८२] शल्यम् अद्योद्-धरिष्यामि मुनीनां चैव कण्टकम् ॥७४॥ [७८
वि-भीषणस्य चैश्वर्यं भविष्यति हते त्वयि ।
८३] न चेत् सत्-कृत्य वैदेहीं प्रणि-पत्य प्र-दास्यसि ॥७५॥ [७९
इत्य् एवं परुषं वाक्यं ब्रुवाणे हरि-पुङ्गवे ।
८४] अमर्ष-वशम् आ-पन्नो निशाचर-गणेश्वरः ॥७६॥ [८०
ततो रोषित-ताम्राऽक्षः शशास सचिवांस् तदा ।
८५] गृह्यताम् इति दुर्-मेधा वध्यताम् इति चाऽसकृत् ॥७७॥ [८१
ते शैल-शृङ्ग-वर्ष्माणम् अग्निम् इद्धम् इवाऽङ्ग-दम् ।
८६] आ-ललम्बुस् ततो घोरांश् चत्वारो रजनी-चराः ॥७८॥ [८२
ग्राहयामास तारेयः स्वयम् आत्मानम् आत्मना ।
८७] बलं नि-दर्शयन् वीरो निशाचर-गणे तदा ॥७९॥ [८३
स तान् बाहु-द्वये सक्तान् आ-दाय पत-गान् इव ।
८८] प्रासादं शैल-सङ्काशम् उत्-पपाताऽङ्ग-दस् तदा ॥८०॥ [८४
तेऽन्तरिक्षाद् विनिर्-धूतास् तस्य वेगेन राक्षसाः ।
८९] भूमौ नि-पतिताः सर्वे तदा निश्चेष्ट-चेतसः ॥८१॥ [८५

---

१. रा$_2$ फ म-निपत्य युधि । २ रा$_2$ फ म-पुरुषो भव ॥ ३. रा$_1$ ल$_1$ ब अ प्र-हर्ताहं० । ल$_2$ म-हत्वाहं० । रा$_2$-हतं हत्वा । ४. रा$_2$ फ म-निरुद्विमास् ॥ ५. प्र-०गरक्षसां । ६. रा$_2$ फ-संकटं ॥ ७. रा$_2$-०स्यति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ म-भृत्यैवं ॥ ९. रा$_2$ फ म-रोषाभिता० । १०. प्र-तथा ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०वर्षाणां । १२. प्र-घोराः श्रुत्वा ते ॥ १३. प्र-मुकुटं स्वयं । १४. फ-विदर्श० ॥ १५. रा$_2$-०ष्टजीविताः ॥

प्रासाद-शिखरं श्री-मद् अङ्ग-देन पराऽऽहतम् ।[1] [८६पू
९०] तत्[2] पपात पदाऽऽक्रान्तं[3] दश-ग्रीवस्य पश्यतः ॥८२॥ [८७पू
९१पू] भङ्क्त्वा प्रासाद-शिखरं नाम वि-श्राव्य चाऽऽत्मनः ।
९१पू] आ-स्फोटयामास तदा नि-र्नदंश्[4] चक्रमे पुनः ॥८३॥[5] [८८
[वायु-वेगं समा-स्थाय रावणस्य ततोऽग्र-तः ।
N] जग्राह मुकुटं वीरः पादम् आ-स्थाय मस्तके ॥८४॥[6] [N
अङ्ग-देन पदाऽऽक्रान्तो रेजे सं-सदि रावणः ।
N] त्रिविक्रम-पदाऽऽक्रान्तो बले(?लिर्)वैरोचनिर् यथा॥८५॥[6] [N
सकाशं कोसलेन्द्रस्य राघवस्य महाऽऽत्मनः ।
९४] सु-ग्रीवस्य च तत् सर्वं समा-गत्य[7] न्य्-अवेदयत् ॥८६॥[8] [N
रावणस् तु परं चक्रे क्रोधं प्रासाद-धर्षितः ।[9][10]
९६] वि-नाशम् आत्मनः शङ्क्य निश्वास-परमोऽभवत् ॥८७॥ [९०

अङ्ग-दः पुनर् आ-गत्य ववन्दे चरणौ ततः ।
N] सु-ग्रीवस्य च रामस्य लक्ष्मणस्य तथैव च ॥८८॥[11] [N
अन्यान्[12] अपि महा-वीरान् अभि-वाद्य महा-बलः ।
N] मुकुटं राक्षसेन्द्रस्य[13] राघवाय न्य्-अवेदयत् ॥८९॥[14] [N
तं दृष्ट्वा मुकुटं रामो रत्न-सार-विभूषितम् ।
N] आ-बबन्ध महा-बाहू रावणाऽनुज-मस्तके ॥९०॥ [N
साधु[15] साधु महा-बाहो यस्य ते बलम् ईदृशम् ।

१. रा$_2$ फ म-प्रासादस्य शिरः श्रीमानङ्गदस्तु यदाहनत् । २. रा$_1$ ल$_1$ ल$_2$ ब भ प्र म-उत्पपात । ३. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-तदाक्रान्तं । म-पदाक्रम्य ॥ ४. प्र-विनद्याच० । ५. म-नास्ति ॥ ६. रा$_1$ ल$_1$ ल$_2$ ब भ प्र म-नास्ति ॥ ७. भ प्र-समागम्य । ८. रा$_2$ फ म-नास्ति ॥ ९. रा$_2$ फ-वधात्मधर्षणात् । १०. म-नास्ति ॥ ११. भ म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-अन्योन्यं ते महावीरा । १३. फ-रक्षोराजस्य ॥ १४. अत आरभ्य ९३—तम श्लोकपर्यन्त म-नास्ति ॥ १५. प्र-नास्ति ॥

N] प्र-हस्याऽङ्ग-दम् आ-भाष्य पुपूजे च वि-भीषणः ॥९१॥ [N
नैतत् कर्म करिष्यन्ति देवता न च पन्न-गाः ।
N] दैत्य-दानव-रक्षांसि वर्ज्यैकं वालिनः सुतम् ॥९२॥ [N
ददर्श वानरी सेना भीषणं च वि-भीषणम् ।
N] मुकुटेन प्र-भासन्तं त्रि-कूटम् इव पर्वतम् ॥९३॥ [N

---

रामस् तु बहुभिर् हृष्टैर् वि-नदद्भिः प्लवं-गमैः ।
N] वृतो रिपु-वधाऽऽकाङ्क्षी युद्धायैवाऽभ्य्-अवर्तत ॥९४॥ [९१
सु-षेणस् तु महा-वीरो गिरि-कूटोपमो हरिः ।
९८] बहुभिः सं-वृतस् तत्र वानरैः काम-रूपिभिः ॥९५॥ [९२
लङ्का-द्वाराणि सर्वाणि सुग्रीव-वचनात् कपिः ।
९९] पर्याऽक्रमत दुर्-धर्षो नक्ष-त्राणीऽव चन्द्रमाः । [९३
N] [र(रं)भने पर्य्-एति सं-हृष्टो हर्षयन् स महा-चमूम् ॥९६॥] [N
अक्षौहिणी-शतं तेषां समवेक्ष्य वनौकसाम् ।
१००] लङ्काम् उपनि-विष्टानां सागरं चाऽभि-वर्तताम् ॥९७॥ [९४
राक्षसा वि-स्मयं जग्मुस् त्रासं जग्मुस् तथा परे ।
१०१] अपरे समरोद्-धर्षा हर्षं चाऽपि प्र-पेदिरे ॥९८॥ [९५
तां तु सेनां निर्-ईक्ष्यैव कपीनां युद्ध-काङ्क्षिणाम् ।
१०२] लङ्काम् उपनि-विष्टानां राघवः सं-जहर्ष ह ॥९९॥ [N
कृत्स्नं हि कपिभिर् व्य्-आप्तं प्राकार-परिखाऽन्तरम् ।

---

१. रा$_1$ ल$_1$ ल$_2$ ब म-पूजयित्वा । प्र-प्रपूज्य च ॥ २. प्र-०वा नैव । रा$_2$ फ-देवा अपि न ॥ ३. रा$_2$ फ-ददृशुर्वानरा वीरा । ४. रा$_2$ फ-मन्दरं ॥ ५. रा$_1$-महान्वीरो । प्र रा$_2$ फ म-महावीर्यो । ६. प्र-०टोपमस्तदा ॥ ७. प्र-पर्याक्रमदुराधर्षो । रा$_2$-पर्याक्रमदुराधर्षो । ८. फ म-नास्ति । ९. रा$_1$ ब-रंभा । ल$_1$ ल$_2$ ब प्र रा$_2$ फ-रंभः ॥ १०. रा$_2$- अभिनि० । ११. ल$_1$ ब-नास्ति ॥ १२. रा$_2$-अन्ये समरदुर्धर्षा । म-०रे समरे हर्षात् । १३. रा$_2$ फ म-चैवाभिपेदिरे ॥ १४. रा फ-तत्रं । १५. ब-नास्ति । १६. रा$_2$ फ-नैर्ऋता: संजहर्षिरे । १७. म-नास्ति ॥

१०३] ददृशू राक्षसाः सर्वे प्रासाद-वलभी-गताः [1] ॥१००॥ [२६
कृत्स्ना हि कपिभिर् [2] व्य्-आप्ता लङ्का रावण-पालिता ।
१०४] स्तिमिता चाऽप्रहृष्टा च बभूव [3] सुदुरा-सदा ॥१०१॥ [N
तस्मिन् महा-भीषणके प्र-वृत्ते [4]
कोलाहले राक्षस-राजधान्याम् ।
प्र-गृह्य रक्षांसि महाऽऽयुधानि [5]
१०५] युगाऽन्त-वाता इव संवि-चेरुः ॥१०२ [२८

इत्यार्षे [6] रामायणे युद्ध-काण्डे [7] लङ्कोपरोधो [8] नाम षोडशः सर्गः ॥१६॥

[वं–१७]= **[सप्तदशः सर्गः]** =[दा–४२]

ततस् ते राक्षसास् त्रस्ता गत्वा रावण-मन्दिरम् [9] ।
१] न्य्-अवेदयन् पुरीं रुद्धां [10] रामेण सह वानरैः ॥१॥ [१
रुद्धां तु नगरीं श्रुत्वा जात-कोपो निशा-चरः ।
२] वि-धानं द्वि-गुणं कृत्वा प्रासादं [11] चाऽभ्य् [12]-अरोहत ॥२॥ [२
स ददर्श वृतां लङ्कां [13] स-शैल-वन-काननाम् ।
३] अ-संख्येयैर् हरि-गणैः सर्व-तो युद्ध-काङ्क्षिभिः ॥३॥ [३
स दृष्ट्वा वानरैः सर्वैः [14] काननं कपिली-कृतम् ।
४] कथं क्षेपयितव्यं [15] स्याद् इति चिन्ता-परोऽभवत् ॥४॥ [४
स चिन्तयित्वा सु-चिरं [16] धैर्यम् आ-लम्ब्य रावणः ।

---

१. म-नास्ति ॥ २. रा१ ल१ ल२ ब भ प्र-बलिभिर् । ३. रा२ फ-निशेव ॥ ४. म-तु वृत्ते । ५. रा१ ल१ ल२ ब भ प्र-तदायु० ॥ ६. फ म-नास्ति । ७. ब भ प्र-लंकाकाण्डे । रा२ म-लंकापर्वणि । ८. ल१-रा२ फ-लंकापरोधो । म-लंकाविरोधो ॥ ९. म-०मन्दिरे । १०. ल१-लंकां ॥ ११. ब फ-प्राकारं । १२. प्र फ-चाप्यरो० । म-च्यभ्यरोहत ॥ १३. प्र-वीरैः ॥ १४. ल१ ल२ ब भ प्र फ रा-सर्वैः । १५. रा१ ल१ ल२ ब भ-क्षमयि० ॥ १६. ब-सचिवं ।

५] हरि-यूथानि रामं च[1] ददर्शाऽऽयत-लोचनः[2] ॥५॥ [९
प्रेक्षतो राक्षसेन्द्रस्य तान्य्[3] अनीकानि भाग-शः ।
६] राघव-प्रिय-कामाऽर्थं लङ्काम् आ-रुरुहुस् तदा ॥६॥ [१३
ते ताम्र-वक्त्रा[4] हेमाऽऽभा रामाऽर्थे त्यक्त-जीविताः ।
७] लङ्काम् एवाऽभ्य्-अधावन्त[5] साल-ताल-शिलाऽऽयुधाः ७ [१४
ते द्रुमैः पुष्पिताऽग्रैस् तु मुष्टिभिश् च महा-बलाः[6] ।
८] प्राकाराऽग्राण्य् अ-संख्यानि[7] ममन्थुस् तोरणानि च ॥८॥ [१५
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः ।
१२] लङ्काम् एवाऽभ्य्-अवर्तन्त[8] महा-वारण-सन्निभाः[9] ॥९॥ [१९
काञ्चनानि प्र-मृद्नन्तस् तोरणानि बली-मुखाः ।
११] कैलास-शिखराऽऽभानि गोपुराऽट्टालकानि च ॥१०॥ [१८
परि-खाः पूरयन्तश् च गम्भीर-विमलोदकाः[10] ।
९] पांसुभिस् तृण-काष्ठैश् च पर्वताऽग्रैश् च[11] वानराः ॥११॥ [१६
शत-साहस्र-यूथैश् च कोटि-यूथैश् च यूथ-पाः ।
१०] कोटि-शत-वृताश् चाऽन्ये लङ्काम् आ-रुरुहुस् तदा ॥१२॥ [१७
जयत्य् अति-बलो रामो लक्ष्मणश् च महा-बलः ।
१३] राजा जयति सु-ग्रीवो राघवेणाऽनु-पालितः ॥१३॥ [२०
इत्य् एवं घोषयन्तश्[12] च गर्जन्तश् च प्लवं-गमाः ।
१४] अभ्य्-अधावन्त लङ्कायाः प्राकारं काम-रूपिणः ॥१४॥ [२१
१५पू] वीर-बाहुः सु-बाहुश् च नलश् च वन-गोचराः ।[13] [२२पू
N] पूर्व-द्वारम् अरुन्धन्त यूथ-पा यूथ-संवृताः ॥१५॥ [N

---

१. प्र-तु । रा$_{२}$ फ-तु । २. रा$_{२}$ फ-व्यस्तलोचनः ॥ ३. रा$_{१}$-स्वानीकानीव । ४. रा$_{१}$ ल$_{१}$ ल$_{२}$ ब अ प्र-०वर्णा । ५. म-०अवर्तन्त ॥ ६. रा$_{२}$ फ-महाबलैः । ७. रा$_{२}$-०प्राण्यप्रसंस्थानि । म-प्राकाराग्राणि सर्वाणि ॥ ८. ल$_{२}$-०भ्यधावन्त । ९. ल$_{२}$ प्र-महारावणस० । म-महावारणस० ॥ १०. ब-०लोदकैः । म-गंभीरं वि० ॥ ११. ल$_{१}$ ल$_{२}$ अ प्र-चैव ॥ १२. फ-घोतयन्तश् ॥ १३. अतः परमधिकः पाठः—रा$_{२}$-एतस्मिन्नन्तरे चक्रुर्लङ्काद्वारप्रवेशनं ॥

१७उ] पश्चिमं कु-मुदो द्वारं कोटिभिर् दशभिर् वृतः ।
१६उ] आ-वृत्य बल-वांस् तस्थौ वानराणां महौजसाम् ॥१६॥ [२३
१७पू] दक्षिणं द्वारम् आ-गम्य वीरः शत-बलिः कपिः ।
१८उ] आ-वृत्य बल-वांस् तस्थौ कोटिभिः सप्तभिर् वृतः ॥१७॥ [२५
उत्-तरं द्वारम् आ-गत्य रामः सौमित्रिणा सह ।
१९] आ-वृत्य बल-वांस् तस्थौ सु-ग्रीवश् च महा-बलः ॥१८॥ [२७
गो-लाङ्गूलो महा-कायो गवाऽक्षो भीम-दर्शनः ।
२०] वृतः कोट्या महा-तेजास् तस्थौ रामस्य पार्श्व-तः ॥१९॥ [२८
ऋक्षाणां भीम-वेगानां धूम्रः शत्रु-निबर्हणः ।
२१] तस्थौ राम-समीपे तु कोटिभिर् दशभिर् वृतः ॥२०॥ [२९
२३उ] सं-नद्धस् तु महा-वीर्यो गदा-पाणिर् वि-भीषणः ।
२४पू] आज्ञा-प्रतीऽऽक्षो रामस्य तस्थौ पार्श्वे महा-बलः ॥२१ [३०
गजो गवाऽक्षो गवयः शरभो गन्ध-मादनः । [३१पू
२२] भीमो दधि-मुखश् चैव केसरी पनसस् तथा । [N
२३पू] एतस्मिन्न् अन्तरे चक्रुः स्कन्धावार-निवेशनम् ॥२२॥ [२२उ
२४उ] ततः कोप-परीऽताऽऽत्मा रावणो राक्षसोऽधिपः ।
निर्-याणं सर्व-सैन्यानां द्रुतम् आऽज्ञपयत् तदा ॥२३॥ [३२
२५] निष्-पतन्ती तदा सेना युक्ता रावण-पालिता ।
सोमेनाऽऽपूर्यमाणस्य वेलेवे सरितां पतेः ॥२४॥ [३७
२६] एतस्मिन्न् अन्तरे रौद्रः सं-ग्रामः सम्-अपद्यत ।
रक्षसां वानराणां च वीराणां काम-रूपिणाम् ॥२५॥ [४१

---

१. रा$_1$ ल$_1$ ल$_2$ ब भ-आगम्य ॥ २. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-महाराजो ॥ रा$_2$-महाबाहोर् ॥ ३. म-नास्ति ॥ ४. रा$_1$ ल$_1$ ल$_2$ ब भ प्र म-नास्ति ॥ ५. म-नास्ति । ६. ल$_1$ ल$_2$ ब भ प्र फ म-आज्ञापयत् ॥ ७. प्र-रावण-नोदिता । रा$_2$ फ-रावणचोदिता ॥ ८. प्र-सा सेना पूर्य० । ९. प्र रा$_2$ फ म-वेला इव महोदधेः ॥ १०. प्र-धीराणां । रा$_2$ फ म-घोराणां ॥

२७] ते गदाभिः प्र-दीप्ताभिः शक्ति-शूल-परश्वधैः ।
निर्-जघ्नुर् वानरान् घोराः कथयन्तः स्वकान् रणे ॥२६॥ [४२
२८] तथा वृक्षैर् महा-कायाः पर्वताऽग्रैश् च वानराः ।
नि-जघ्नुर् अथ रक्षांसि नखैर् दन्तैश् च वेगिताः ॥२७॥ [४४
२९] राक्षसास् त्व् अपरे घोराः प्राकार-स्था मही-गतान् ।
वानरान् भिण्डि-पालैश् च शक्तिभिश् च व्य्-अदारयन् २८ [४५
३०] वानराश् चाऽपि सं-क्रुद्धा राक्षसांस् तान् महा-बलान् ।
प्राकारात् पातयामासुर् अभि-जघ्नुश् च मुष्टिभिः ॥२९॥ [४६
३१] स सम्प्र-हारस् तुमुलो मांस-शोणित-कर्दमः ।
रक्षसां वानराणां च बभूवाऽद्भुत-दर्शनः ॥३०॥ [४७
वनौकसां तत्र तु संभि-नादो
लङ्का-गतानां च निशा-चराणाम् ।
प्रक्ष्वेडिताऽऽस्फोटित-नर्दितानां
३२] द्वाभ्यां महद्भ्याम् इव सागराभ्याम् ॥३१॥ [४८

इत्यार्षे रामायणे युद्ध-काण्डे प्रथम-सम्प्रहारो नाम सप्तदशः सर्गः ॥१७॥

## [वं-१८]= [अष्टादशः सर्गः] =[दा-४३]

युध्यतां तु वेतम् तेषां वानराणां महाऽऽत्मनाम् ।
१] रक्षसां च बभूवाऽथ बल-कोपः सु-दारुणः ॥१॥ [१

---

१. म-प्रदीप्ताभिः । २. म-नास्ति ॥ ३. रा$_2$ फ-०कायैः । ४. ल$_2$-वेगतः ॥ ५. रा$_2$ प्र-विदारयन् ॥ ६. प्र रा$_2$ फ-राक्षसांश्च । म-०सांस्तु । ७. प्र रा$_2$ फ म-०बलाः । ८. म-०जग्मुश् ॥ ९. म-सुसंभि० । १०. रा$_2$ फ-०नर्दितानां । म-०मर्दितानां ॥ ११. रा$_2$ फ म-नास्ति । १२ प्र-लंकाकाण्डे । रा$_2$-लंकापर्वणि । म-युद्धपर्वणि । १३. रा$_1$ ल$_1$ ल$_2$ ब-०संहारो । म-प्रहारो ॥ फ-०मप्रहारो ॥ १४. प्र म-तथा । रा$_2$ फ-तदा ॥

ते[1] हयैः काञ्चनाऽऽपीडैर् गजैश् चाऽद्भुत-दर्शनैः ।
२] रथैश् चाऽऽदित्य-सङ्काशैः कवचैश् च महा-प्रभैः ॥२॥ [२
४उ] विनिर्-ययुर् महा-नादैर् नादयन्तो मही-तलम् ।
५उ] राक्षसा भीम-कर्माणो रावणस्य जयैषिणः ॥३॥ [३
६उ] वानराणाम् अपि चमू रामस्य जयम् इच्छती ।
अभ्य्-अधावत् तदा घोरा राक्षसानां वधं प्रति ॥४॥ [४
७] एतस्मिन्न् अन्तरे तेषाम् अन्योऽन्यम् अभि-धावताम् ।
रक्षसां वानराणां च द्वन्द्व-युद्धम् अवर्तत ॥५॥ [५
८] अङ्गदेनेन्द्र-जित् सार्धं वालि-पुत्रेण राक्षसः ।
अयुध्यत महा-तेजा वह्नि-मान् इव पर्वतः ॥६॥ [६
९] प्र-जङ्घेन च सं-पातिर् वीरो दुर्-धर्षणेन च ।
जम्बु-मालिनम् आ-यस्तो हनु-मान् अपि वानरः ॥७॥ [७
१०] सं-गतः सु-महाक्रोधो राक्षसो रावणाऽनुजः ।
सम्-अरे तीक्ष्ण-वेगेन मित्र-घ्नेन वि-भीषणः ॥८॥ [८
११] तपनेन नलः सार्धं राक्षसेन महा-बलः ।
नि-कुम्भेन महा-तेजा नीलो हरिर् अयुध्यत ॥९॥ [९
१२] सु-ग्रीवो वानरेन्द्रस् तु प्र-घसेन समा-गतः ।
सं-गतः सम्-अरे श्री-मान् विरूपाऽक्षेण लक्ष्मणः ॥१०॥ [१०
१३] अग्नि-केतुश् च दुर्-धर्षो रश्मि-केतुश् च राक्षसः ।
सुप्त-घ्नो यज्ञ-कोपश् च रामेण सह सं-गतः ॥११॥ [११
१४] वज्र-मुष्टिस् च मैन्देन द्वि-विदेनाऽशनि-प्रभः । [१२पू

---

१. ल$_2$-हेतयः । म-तैर्हयैः । २. प्र-०तभूषणैः । ३. ब-महाबलैः ॥ ४. रा$_2$ फ-०जग्मुर् । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र फ-०नादाः । ६. रा$_2$-छादयन्तो ॥ ७. म-इच्छतां ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-प्रजघ्नेन । ९. ल$_1$-आयातो । १०. म-इव ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब-नास्ति ॥ १२. प्र रा$_2$ फ म-संयुगे ॥ १३. प्र-वीर्यवान् । १४. रा$_2$ फ म-भिन्नाः-सुयुक्तो । १५. रा$_2$-संगमः ॥ १६. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-वज्रमुष्टिश् ।

१५उ] गजेनाऽऽदित्य-सङ्काशो वीरः प्र-तपनस् तथा ॥१२॥ [१३पू
महोदरः सु-षेणेन वानरेण च सं-गतः ।
१६] अयुध्यत महा-बाहुः शक्रेण न-मुचिर् यथा ॥१३॥ [N
जाम्ब-वान् मकराऽक्षेण धूम्रः कुम्भेन सं-गतः ।
१७] नराऽन्तकेन पनसः सं-गतो रक्षसा हरिः ॥१४॥ [N
देवाऽन्तको गवाऽक्षेण त्रि-शिराः शरभेण च ।
१८] रक्षसाऽकम्पनेनाऽऽजौ युयुधे कु-मुदो हरिः ॥१५॥ [N
ऋषभो वानर-श्रेष्ठः सारणेन समा-गतः ।
१९] अति-कायेन वि-नतो रम्भश् चैव समा-गतौ ॥१६॥ [N
धूम्राऽक्षेण समा-सक्तः केसरी हनुमत्-पिता ।
२०] वेग-दर्शी शुकेनाऽऽजौ सम्प्र-हारम् अथाऽकरोत् ॥१७॥ [N
सं-क्रुद्धं तु महा-पार्श्वं युयुधे गन्ध-मादनः ।
२१] वीरः शत-बली रक्षो विद्युज्-जिह्वम् अयोधयत् ॥१८॥ [N
वानराश् चाऽपरे घोरा राक्षसैर् अपरैः सह ।
२२] द्वन्द्व-युद्धम् अकुर्वंस् ते बहवो बहुभिस् तदा ॥१९॥ [१५
तत्राऽऽसीत् सु-महद् युद्धं तुमुलं रोम-हर्षणम् ।
२३] रक्षसां वानराणां च वीराणां जयम् इच्छताम् ॥२०॥ [१६
हरि-राक्षस-देहेस् तु प्र-वृद्धाः केश-शाद्वलाः ।
२४] शरीर-संघात-वहाः सुस्रुवुः शोणिताऽऽपगाः ॥२१॥ [१७
तस्मिन् प्र-वृत्ते सं-ग्रामे रौद्रे भीरु-भयंकरे ।

---

१. ल$_{1}$ ल$_{2}$ ब भ रा$_{2}$ फ म-समागतः ॥ २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-नरकाक्षेण । ३. प्र रा$_{2}$ फ म-संसक्तो । ४. प्र-हरः ॥ ५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब रा$_{2}$-देवकान्तो । ६. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-रभसेन । ७. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-संप्रहारमथाकरोत् । म-युयुत्सुः कुमदो ज्वलन् ॥ ८. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब फ-सागरेण ॥ ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-समागतः ॥ १०. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र- ०बलो । ११. रा$_{1}$ ल$_{1}$ ल$_{2}$ भ-०भिः सह ॥ १२. म-तुमुलं । १३. भ प्र रा$_{2}$ फ-०लं लोमह० । म-नरवानररक्षसां ॥ १४. रा$_{2}$ फ-०सदेहेभ्यः । म-०संदेहेषु । १५. रा$_{2}$ फ-०संघनिवहाः ॥

२५] हरि-राक्षसयोर् युद्धं तुमुलं सम्-अपद्यत[1] ।
N] हरीणां युव-राजस्य राक्षसानां तथैव च ॥२२॥ [N
आ-जघानेन्द्र-जित् क्रुद्धो वज्रेणेव शत-क्रतुः ।
२६] अङ्ग-दं गदया घोरः स[2] तु शत्रु-विदारणः ॥२३॥ [१८
तस्य काञ्चन-चित्राऽङ्गं रथं साऽश्वं स-सारथिम् ।
२७] जघान सम्-अरे श्री-मान् अङ्ग-दो दन्त[3]-कूबरम् ॥२४॥ [१९
सं-पातिस् तु प्र-जङ्घेन त्रिभिर् बाणैर् वि-दारितः ।
२८] नि-जघानाऽश्व-कर्णेन प्र-जङ्घं तु महा-बलः ॥२५॥[4] [२०
अति-कायोऽति-बलवान् देव-दानव-दर्पहा ।
२९] रम्भं च वि-नतं चैव ताडयामास मार्गणैः ॥२६॥ [N
तौ शिला-वृक्ष-वर्षेण तस्य सैन्यं नि-जघ्नतुः ।
N] जलदाव् इव सं-रब्धौ वात-वृष्ट्या गवां गणम् ॥२७॥ [N
महोदरः सु-संरब्धः सु-षेणं पञ्चभिः शितैः[6] ।
N] हृदि विव्याध नाराचैर् ललाटे च त्रिभिः शरैः ॥२८॥ [N
स तथाऽभि-हतस् तेन रक्षसा वानरोत्तमः ।
N] जघान शिलया तस्य रथं साऽश्वं स-सारथिम् ॥२९॥ [N
तौ जयाऽऽकाङ्क्षिणौ दृप्तौ वीर्य-वन्तौ दुरा-सदौ ।
N] चक्रतुस् तुमुलं युद्धं स्वं-सैन्य-परिवारितौ ॥३०॥ [N
जाम्ब-वान् ऋक्ष-राजस् तु मकराऽक्षं खराऽऽत्मजम् ।
N] माऽहिणोद् वृक्षम् उत्-पाट्य तं स चिच्छेद मार्गणैः ॥३१॥ [N
ततो निशा-चरः क्रुद्धो जाम्ब-वन्तं शितैः शरैः ।
N] हृदि बाह्वोर् ललाटे च विव्या-ध लघुहस्त-वत् ॥३२॥ [N

१. प्र-संप्रपद्यत ॥ २. रा$_2$ फ-शत्रुसैन्यविदा० । म-शक्रसैन्यवि० ॥ ३. म-हतकूबरः ॥ ४. म-नास्ति ॥ ५. रा$_2$-अस्मवृष्ट्या । म-'वात०' इत्यारभ्य 'सुसंरब्धः' इत्यन्तः पाठो नास्ति ॥ ६. रा$_1$ ल$_1$ लं$_2$ ब भ रा$_2$-शरैः ॥ ७. रा$_1$ ल$_1$ ब भ फ-सुसैन्य० ॥ ८. म-च ॥ ९. म-कृतह० ॥

स ते[1]थाऽभि-हतस् तेन क्षिप्र-हस्तेन यूथ-पः ।
N] व्यू-अश्व-सूत-रथं चक्रे नाऽति-कृच्छ्रात् खराऽऽत्मजम् ३३ [N
भृशं श[2]त-बलिर् विद्धो विद्युज्-जिह्वेन रक्षसा ।
N] नि-जघानाऽश्व-कर्णेन विद्युज्-जिह्वं स्तनाऽन्तरे ॥३४॥ [N
नि-घ्नन्तं राक्षसान् वी[3]रान् ग[4]जं प्र-तपनो हरिर् ।
N] शूले[5]न जघ्निवान् पार्श्वे ननाद च महा-स्वनम् ॥३५॥ [N
स तु रोष-परीऽताऽङ्गः शाल-वृक्षेण राक्षसम् ।
N] नि-जघान गजो मत्तो दृप्तं व्याघ्रं यथा वने ॥३६॥ [N
कुम्भकर्णाऽऽत्मजं कुम्भं सम्-अरे सु[6]-व्यवस्थितम् ।
ग्रसन्तम् इव सैन्यानि दण्ड-ह[7]स्तम् इवाऽन्त-कम् ।
N] प्रा[8]ऽयोधयत सं-रब्धो धूम्रो वृक्ष-शिलाऽऽयुधः ॥३७॥ [N
तौ राक्षस-हरी वीरौ स्व-सैन्य-परिवारितौ ।
N] चक्राते प्र[9]थमं युद्धं बलि-शक्रौ यथा पुरा ॥३८॥ [N
देवाऽन्त[10]को गवाऽक्षं तु[11] हृदि विव्याध मार्गणैः ।
N] पञ्चभिः सु-महावेगैर् आ-कर्ण-प्रेषितैः शि[12]तैः ॥३९॥ [N
स[13] त[13]था ताडितस् तेन सं-क्रुद्धश् चलितेन्द्रियः ।
प्राऽहिणोच् छालम् उत्-पाट्य तं स चिच्छेद सप्तभिः ।[14]
N] पुनश् च नवभिर् वीरं विव्याध कृ[15]तहस्त-वत् ॥४०॥ [N
अथाऽऽरु[16]ह्य गिरेः शृङ्गं गवाऽक्षो वानरोत्तमः ।[17]
N] प्राऽहिणोत् तं समुद्-दिश्य तस्य सैन्यं जघान तत्र ॥४१॥ [N

---

१. रा२-तदाभि० ॥ २. रा२-कुब्जः शतबलिर् ॥ ३. म-वीरो । ४. रा२ फ-गर्जन् प्रतपनो हरिः । ५. म-शूलेनाभ्याहनत् ॥ ६. म-समवस्थितं । ७. म-दण्डपाणिरिवान्तकः । ८. रा१-आयो० ॥ ९. फ म-तुमुलं ॥ १०. रा१ ब१ ल२ ब-देवकान्तो । ११. ब-तं । १२. ब रा२-शरैः ॥ १३. म- सर्वथा । १४. ब-नास्ति । १५. ब-लघुह० ॥ १६. म-तथा गृह्य । १७. म-हृदि विव्याध मार्गणैः ॥

एवं तौ बलिनां श्रेष्ठौ युयुधाते परस्परम् ।
N] कृत-प्रतिकृते(?त-)यत्नाव् अन्योऽन्य-वध-काङ्क्षिणौ ॥४२॥ [N
सारणेन[2] समा-हूत ऋषभो वानरोत्तमः ।
N] सारणं वृक्षम् उत्-पाट्य सै जघान[3] स्तनाऽन्तरे ॥४३॥ [N
स तेनाऽति-प्रहारेण व्या-घूर्णित इवाऽभवत् ।
N] अपाऽसर्पद् धनुष्य्[4] अष्टौ[5] वि-षण्णश् चाऽभवत् क्षणात् ४४ [N
मेघाऽऽभं गजम् आ-रूढम् त्रि-शिराः शरभं हरिम् ।
N] तोमरेण समा-हत्य शिरसि प्राऽणुदद् भृशम्[6] ॥४५॥ [N
स तु रोष-परीऽताऽङ्गः[7] सप्त-पर्णेन तं गजम् ।
N] जघानाऽति-बलश् चण्डः शरभो वा गजं वने ॥४६॥ [N
नराऽन्तकोऽथ[8] पनसं ताडयामास मार्गणैः ।
N] सोऽपि पादप-वर्षेण तं विव्याध प्लवं-गमः ॥४७॥ [N
अ-कम्पनेन कु-मुदः परि-घेण समा-हतः[9] ।
N] जानुभ्याम् अवनिं गत्वा नि-मेषात् पुनर् उत्थि(द्-स्थि)तः ४८ [N
सं-क्रुद्धो रोष-ताम्राऽक्षो[10] मुष्टिं तस्मिन्न्[11] अपातयत् ।
N] मुष्टि-प्रहाराऽभिहतो वि-चेता इव सोऽभवत् ॥४९॥ [N
अयोधयत[12] चाऽऽश्वस्तः पुनर् एव प्लवं-गमम् ।
N] धूम्राऽक्षः शर-वर्षेण हनुमत्-पितरं हरिम् ॥५०॥ [N
स सैन्यं पूरयामास[13] धाराभिर् इव पर्वतम् ।
N] सोऽपि वृक्षैः शिलाभिश्[14] च स-सैन्यं तं समाऽर्दयत्[15] ॥५१॥ [N

---

१. म-०प्रतिहतं ॥ २. ब-सारसेन । ३. म-निज० ॥ ४. रा$_2$-धनुर्हस्तो ॥ ५. ब फ—प्राणद० । रा$_2$-प्रापनद्द्रुतं । ६. प्र-नास्ति ॥ ७. ल$_2$-०तात्मा ॥ ८. रा$_1$ ल$_1$ल$_2$ ब-नरकान्तोथ ॥ ९. प्र-समाहितः । रा$_2$-महाहतः ॥ १०. रा$_2$-रक्तता० । ११. प्र-०तस्मिन् ह्यपा० ॥ १२. रा$_1$-अयोध्यत चा० । म-अयोधयं स विन्नस्तः ॥ १३. म-सूदयामास । १४. रा$_1$-शिलामिश्रैः । १५. फ म-अयोधयत् ॥

महा-पार्श्वेन सं-सक्तो यूथ-पो गन्ध-मादनः ।
N] चक्रे सु-तुमुलं युद्धं शिला-दन्त-नखाऽऽयुधः ॥५२॥ [N
वेग-दर्शी शुकेनाऽऽजौ मर्मण्य् अभि-हतः शरैः ।
N] उत्-तमं वेगम् आ-स्थाय रथं तस्य व्य्-अचूर्णयत् ॥५३॥ [N
राक्षसस् तपनो घोरो नलं समभि (?भ्य) वर्तत । [२३
३०] नलेन तु नलस् तस्य चक्षुषी विन्य्-अपातयत् ॥५४॥
भिन्न-गात्रः शरैस् तीक्ष्णैः क्षिप्र-हस्तेन रक्षसा । [२४
३१] नि-जघानेन्द्र-वृक्षेण तपनं राक्षसं नलः ॥५५॥ [N
जम्बु-माली रथ-स्थस् तु रथ-शक्त्या महा-बलः ।
३२] बिभेद सम्-अरे क्रुद्धो हनु-मन्तं स्तनाऽन्तरे ॥५६॥ [२१
तस्य तं रथम् आ-रुह्य हनु-मान् कपि-कुञ्जरः ।
३३] प्र-ममाथ तलेनैव गिरि-शृङ्गोपमं शिरः ॥५७॥ [२२
भिन्न-गात्रः शरैस् तीक्ष्णैर् मित्र-घ्नेन वि-भीषणः ।
३४] मित्र-घ्नं गदया वीरो नि-जघान स्तनोऽन्तरे ॥५८॥ [N
ग्रसन्तम् इव सैन्यानि प्र-घसं वानराऽधिपः ।
३५] सु-ग्रीवः सप्त-पर्णेन नि-जघान ननाद च ॥५९॥ [२५
वर्षन्तं शर-वर्षाणि राक्षसं भीम-दर्शनम् ।
३६] नि-जघान विरूपाऽक्षं शरेणैकेन लक्ष्मणः ॥६०॥ [२६
अग्नि-केतुश् च दुर्-धर्षो रश्मि-केतुश् च राक्षसः ।
३७] सुप्त-घ्नो यज्ञ-कोपश् च रामं निर्-बिभिदुः शरैः ॥६१॥ [२७
तेषां चतुर्णां रामस् तु शिरांसि सम्-अरे शितैः ।

१. रा$_{2}$-संरक्तो ॥ २. म-क्रोधो । ३. रा$_{1}$-०वर्तते । ४. रा$_{2}$-वक्षसि । ५. रा$_{2}$ फ-व्यत्यपातयत् ॥ ६. म-नास्ति ॥ ७. फ-रथस्थश्च ॥ ८. म-आस्थाय ॥ ९. रा$_{2}$-शतैस् । १०. म-लीनैर्मित्रघ्नो न । ११. म-नास्ति ॥ १२. प्र-स्तरेणैव च ॥ १३. रा$_{1}$ ल$_{1}$ ल$_{2}$ च-सुतघ्नो । १४. रा$_{2}$-यज्ञकेतुश्च रामं विनिर्भिदुः ॥

३८] क्रुद्धश् चतुर्भिश् चिच्छेद शरैर् अग्नि-शिखोपमैः ॥६२॥ [२८
वज्र-मुष्टिम् तु मैन्देन मुष्टिनाऽभि-हतो रणे ।
३९] पपात स-रथः साऽश्वः पुराऽट्टश्यत भू-तले ॥६३॥ [२९
वज्राऽशनि-सम-स्पर्शं द्वि-विदश् चाऽशनि-प्रभम् ।
N] जघान गिरि-शृङ्गेण मिषतां सर्व-रक्षसाम् ॥६४॥ [३३
नि-कुम्भः सम्-अरे नीलं नीलाऽञ्जन-चय-प्रभम् ।
४०] बिभेद तरसा बाणैर् मेघं सूर्य इवांऽशुभिः ॥६५॥ [३०
पुनः शर-शतेनैव क्षिप्र-हस्तो निशा-चरः ।
४१] बिभेद सम्-अरे नीलं नि-कुम्भः प्र-जहास च ॥६६॥ [३१
तस्यैवं रथ-चक्रेण नीलो वि-ष्णव्य चाऽऽहवे ।
४२] शिरश् चिच्छेद सं-यत्तः सोऽपतद् वि-ह्वलो भुवि ॥६७॥ [३२
भल्लैः खड्गैर् गदाभिश् च शक्ति-तोमर-सायकैः ।
५३] अप-विद्धैश् च भग्नैश् च रथैः साङ्ग्रामिकैर् हयैः ॥६८॥ [४४
५४पू] नि-हतैः कुञ्जरैर् मत्तैस् तथा वानर-राक्षसैः ।
५६पू] बभूवाऽऽयोधनं घोरं गोमायु-व्रज-सङ्कुलम् ॥६९॥
५४उ] चक्राऽक्ष-युग-शस्त्रैश् च भग्नैर् भू-तलम् आ-श्रितैः । [४५
५६उ] कबन्धानि समुत्-पेतुम् तस्मिन् युद्धे सु-दारुणे ॥७०॥ [४६पू
वि-दार्यमाणा हरि-पुङ्गवैस् तदा
निशा-चराः शोणित-गन्ध-मोहिताः ।
पुनः सुसंरब्ध-तरा व्यव-स्थिता

१. ल$_1$ ब-अभिमुखोपमैः ॥ २. म-सुराग्नि इव । रा$_2$-त्रिपुरा इव ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब-निकुंजस० । ४. म-नास्ति ॥ ५. रा$_1$-तस्य वै । ६. रा$_2$ फ म-विष्णुरिवाहवे । ७. रा$_2$-समरे । ८. रा$_1$ ल$_1$ ल$_2$ ब-विमलो । प्र-विपुलो ॥ ९. प्र-बलैः ॥ १०. प्र-दन्तैस् । ११. रा$_1$ ल$_1$ ब भ रा$_2$ म-०युवटसंकुलं । फ-०युवरसंकुलं ॥ १२. प्र-०गहस्तैश् । १३. रा$_2$-भूलितमा० ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-०पुंगवास् । १५. रा$_1$-सुसंरुद्धतरा । प्र-च संरब्धतरा ।

५९] दिवा-करस्याऽस्तमयाऽभिकाङ्क्षिणः ॥७१॥ [४७

इत्यार्षे रामायणे युद्धकाण्डे द्वन्द्व-युद्धं नामाऽष्टादशः सर्गः ॥१८॥

---

[वं-१९]= [ एकोनविंशः सर्गः ] =[दा-४४]

युध्यताम् एव तेषां तु तदा वानर-रक्षसाम् ।
१] रविर् अस्तं गतो रात्रिः प्र-वृत्ता प्राण-हारिणी ॥१॥ [१
अन्योऽन्यं बद्ध-वैराणां घोराणां जयम् इच्छताम् ।
२] सम्प्र-वृत्तं निशा-युद्धं तदा वानर-रक्षसाम् ॥२॥ [२
राक्षसोऽसीऽति हरयो वानरोऽसीऽति राक्षसाः ।
३] अन्योऽन्यं सम्-अरे जघ्नुस् तस्मिंस् तमसि दारुणे ॥३॥ [३
ऐहि दारय भिन्धीऽति वि-द्रावय वि-कर्षय ।
४] एवं सु-तुमुलः शब्दस् तस्मिंस् तमसि शुश्रुवे ॥४॥ [४
कालाः काञ्चन-संनाहास् तस्मिंस् तमसि राक्षसाः ।
५] सम्-अदृश्यन्त शैलेन्द्रा दीप्तौषधिधरा इव ॥५॥ [५
ऋक्षाम् तिमिर-संकाशाम् तस्मिंस् तमसि भैरवे । [N
६] परि-पेतुः सु-संक्रुद्धा भर्त्सयन्तो निशा-चरान् ॥६॥
तस्मिंस् तमसि दुष्-पारे राक्षसान् क्रोध-मूर्च्छितान् । [६

---

१. फ म-नास्ति । २. ब प्र रा$_2$-लंकाकाण्डे । म-युद्धपर्वणि ॥ ३ म-नास्ति । ४. ल$_1$-नास्ति ॥ ५. रा$_1$-बुद्ध० ॥ ६. रा$_1$ ब प्र-०सोस्मीति ह... रोस्मीति । ७. ल$_1$ ल$_2$ अ-भैरवे । ८. अतः परमधिकः पाठः—रा$_2$-वानरा-राक्षसांश्चैव तस्मिंस्तमसि दारयो ॥ ९.प्र रा$_2$ फ म-भिन्धि दारय एहीति । १०. ल$_1$-नास्ति ॥ ११. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-०संकाशास् । फ-सन्नाहास् । १२. रा$_1$ ल$_2$ अ प्र म-भैरवे । १३. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-नास्ति । म-सम्प्रादृश्यन्त शैलेन्द्रा दीप्ता धातुनिशाचराः ॥ १४. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$-निशाचराः ॥ १५. अ प्र-साः क्रोधमास्थिताः । रा$_1$ ल$_1$ ल$_2$ ब-०साः क्रोध-मूर्छिताः । १६. म-नास्ति ।

७] परि-पेतुः सु-संक्रुद्धा भक्षयन्तो वने-चराः ।।७।। [N
८पू] निन्युर् यम-क्षयं क्रुद्धा मुष्टिभिर् दशनैस् तथा ।[2] [N
हयांश् च काञ्चनाऽऽपीडान् ध्वजांश् चाऽऽभरणानि च ।
९] आ-प्लुत्य दशनैस् तीक्ष्णैर् नखैश् च नि-चैकर्तिरे ।।८।। [७
कुञ्जरान् कुञ्जराऽऽरोहान् पादातान् रथिनो रथान् ।
१०] आ-प्लुत्य वि-चकर्षुस् ते दशनैः क्रोध-मूर्च्छिताः ।।९।। [८
लक्ष्मणस्त्व् अथ रामश् च शरैर् अग्नि-शिखोपमैः ।
११पू] आ-दिश्याऽऽदिश्य रक्षांसि प्र-वराणि नि-जघ्नतुः ।।१०।। [९
तुरङ्ग-खुर-विध्वस्तं रथ-नेमि-समुद्धतम् ।
१२] कण्ठान् अरौत्सीद् योधानां चक्षूंषि च मही-रजः ।।११।। [१०
वर्तमाने तथा घोरे सं-ग्रामे लोम-हर्षणे ।
१३] लोहितौघा महाऽऽवर्ता नद्यो घोरा वि-सुस्रुवुः ।।१२।। [११
नादो भेरी-मृदङ्गानां पणवानां च निः-स्वनः ।
१४] शङ्ख-वेणु-रवोन्मिश्रो रक्षसां काम-रूपिणाम् ।।१३।। [१२
हयानां स्वनमानानां राक्षसानां च निः-स्वनम्(?:) ।[12]
१५] शस्त्राणां वानराणां च सं-बभूव सु-दारुणः ।।१४।। [१३
शस्त्र-पुष्पोपहारा सा तत्राऽऽसीद् युद्ध-मेदिनी ।
१६] दुर्-दर्शा दुर्वि-गाहा च शोणित-स्रा(स्रा)व-कर्दमा ।।१५।।[१५
सा बभूव निशा घोरा हरि-राक्षस-हारिणी ।
१८] काल-रात्रीऽव भूतानां सर्वेषां दुर्-अतिक्रमा ।।१६।। [१६

---

१. रा$_1$ ल$_1$ ल$_2$ ब ब्न प्र म-नास्ति ॥ २. रा$_1$ ल$_1$ ल$_2$ ब ब्न प्र फ म-नास्ति । अतः परमधिकः पाठः—रा$_2$-उत्पतंतश्च हरयो निपतंतश्च राक्षसाः । ३. फ म-विचकर्षिरे ॥ ४. रा$_1$ ल$_2$ ब ब्न प्र म-पदा० । रा$_2$ फ-पताकान् । ५. रा$_1$ ल$_1$ ल$_2$ ब ब्न प्र म-हयान् ॥ ६. रा$_2$-०णश्च तथा रामः ॥ ७. रा$_2$-०समुत्थितं । फ-०समुद्गतं । ८. रा$_2$-महद्रजः ॥ ९. प्र-नाना । रा$_2$ फ-ततो । १०. प्र-०रवैर्मिश्रो । ११. म-नास्ति ॥ १२. रा$_1$ ल$_1$ ल$_2$ ब ब्न प्र-अतं आरभ्य २६-शश्लोकपूर्वार्धं यावत्पाठो नास्ति ॥

तततम् ते राक्षसाः सर्वे तस्मिंस् तमसि दारुणे ।
१९] रामम् एवाऽभ्य्-अधावन्त सृजन्तः सायकान् बहून् ॥१७॥ [१७
तेषाम् आ-पततां शब्दः क्रुद्धानाम् अभि-गर्जताम् ।
२०] उद्-वृत्त इव सर्वेषां सागराणां महा-स्वनः ॥१८॥ [१८
तेषां रामः शरैः षड्भिः षड् विभेद निशा-चरान् ।
२१] निमिषाऽन्तर-मात्रेण शितैर् अग्नि-शिखोपमैः ॥१९॥ [१९
यम(?ज्ञ)-शत्रुं च दुर्-धर्षं महापार्श्व-महोदरौ ।
२२] वज्र-दंष्ट्रं(?ष्ट्रं)महा-कायं तौ चोभौ शुक-सारणौ ॥२०॥ [२०
२३उ] ते तु रामेण तैर् बाणैः सर्व-गात्रेषु ताडिताः ।
N] युद्धाद् अप-सृताम् त्रासाद् अव-शेषेण चाऽऽयुषः ॥२१॥ [२१
ततः काञ्चन-चित्राऽङ्गैः सं-पतद्भिः सहस्र-शः । [N
२४] दिशश् चकार वि-मला वि-दिशश् च महा-बलः ॥२२॥ [२२उ
ये त्व् अन्ये राक्षसा वीरा रामस्याऽभि-मुखे स्थिताः ।
२५] ते वि-नष्टाः समा-साद्य पतङ्गा इव पावकम् ॥२३॥ [२३
ततः काञ्चन-चित्राऽङ्गैः शरैर् अग्नि-शिखोपमैः । [२२पू
२६] तत् तमो रात्रि-जं रामः किं-चिद् उत्-सारयंस् तदा ॥२४॥ [N
तम् अन्ध-कारम् उत्-साद्य बाणैर् बाण-धरां गतिर्मे ।
२७] चक्षुर्-विषयम् आ-साद्य शरौघैः सम्-अवर्तयत् ॥२५॥ [N
आ-संपतद्भिर् वि-शिखै रुक्म-पुङ्खैः सहस्र-शः ।
N] बभूव रजनी चित्रा ख-द्योतैर् इव शारदी ॥२६॥ [२४
राक्षसानां महा-नादैर् वानराणां च गर्जितैः ।
२८] सा बभूव निशा घोरा भूयो घोर-तरा तदा ॥२७॥ [२५

---

१. रा₂ म-क्रुद्धानाम् । २. रा₂-उद्वृत्तम् ॥ ३. म-षड्भिरेव ॥ ४. रा₂-यमशत्रुं च दुर्धर्षौ । फ-रामशत्रून् दुर्धर्षौ । ५. रा₂ फ-०दंष्ट्रे महाकायः ॥ ६. म-ते । ७. फ-वायुषः ॥ ८. म-महारथैः ॥ ९. म-मुखे । १० म-०मुखं ॥ ११ म-नास्ति ॥ १२. रा₂-बाणवशं गतः ॥ १३. म-नास्ति ॥

भेरी-शब्देन महता प्र-वृद्धेन समन्त-तः ।[1]
३०] त्रिकूट(?टः)कन्दर-मुखैः प्रव्याऽहरद् इव स्थिना'(°न्नः)[2]२८ [२६
गो-लाङ्गूला महा-कायास् तमसस् तुल्य-वर्चसः ।
३१] सम्परि-ष्वज्य बाहुभ्याम् अखादन्त निशा-चरान् ॥२९॥[3] [२७
ततः क्रोध-समाविष्टः शर-वर्षेण रावणिः ।
३२] अङ्ग-दस्य चमूं घोरां नाशयामास सर्व-तः ॥३०॥ [N
ततः क्रोध-परीऽताऽऽत्मा युव-राजोऽङ्ग-दो बली ।
३३] शिलाम् उत्-पाटयामास बाहुभ्यां प्र-णदन् मुहुः ॥३१॥ [N
तां समुत्-क्षिप्य तेजस्वी छाद्यमानः शरोर्मिभिः ।
३४] रथं बभञ्ज वेगेन शिलया कपि-कुञ्जरः ॥३२॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे रात्रि-युद्धं नामैकोनविंशः सर्गः ॥१९॥

---

[वं–N]= **[ विंशः सर्गः ]** =[दा–४४]

वर्तमाने तथा रौद्रे[6] सं-ग्रामेऽति-भयङ्करे । [२९पू
अङ्ग-दो वि-रथं वीरो रावणिं समुपाऽद्रवत् ॥१॥ [N
इन्द्र-जित् तु रथं त्यक्त्वा हताऽश्वो हत-सारथिः ।
अङ्ग-देन सहाऽऽयेस्तस् तत्रैवाऽन्तर् अधीयत ॥२॥ [२९उ
स यज्ञ-वेद्यां विधि-वत् पावकं जुहुवेऽस्त्र-वित् ।
जुह्वतस् तस्य तत्राऽग्निं रक्त-पीताऽम्बर-स्रजः ॥३॥ [N
आ-जेहुस् तत्र सं-भ्रान्ता राक्षसा यत्र रावणिः ।

१. म-नास्ति । २. म-चित्रकूटकन्दरप्रख्यैर्महाकायैर्महास्वनैः ॥ ३. रा१ ल१ ल२ व अ प्र म-अत आरभ्य सर्गसमाप्तिं यावत्पाठो नास्ति ॥ ४. फ-नास्ति । ५. प्र रा२ म-लंकाकांडे । ब-नास्ति ॥ ६. ल१-युद्धे । अ-घोरे । ७. म-०घोष महावीरो ॥ ८. रा१-हताश्वरथसा० ॥ ९. म-अंगदं च समाहूय ॥ १०. म-रक्तोष्णीषाम्बरस्रजः ॥ ११. रा१ ल१ अ प्र फ-आजुहुस् । रा२-आजह्रुस् ॥

शस्त्राणि शत-पत्राणि समू-इध्मोऽथ वि-भीतकान् ॥४॥ [N
लोहितानि च वासांसि स्रुचं[1] कार्ष्णाऽऽयसं तथा ।
सर्व-तोऽग्निं समा-स्तीर्य शत-पत्रैः स-तोमरैः ॥५॥ [N
छागस्याऽपि च कृष्णस्य कण्ठाज् जग्राह जीवतः[2] ।
शोणितं तच् च विधि-वत् स जुहाव रणोत्सुकः ॥६॥ [N
सकृद् एव समू-इद्धस्य[3] वि-धूमस्य महाऽर्चिषः ।
बभूवुः सु[4]-निमित्तानि वि-जयस्य प्र-दक्षिणम् ॥७॥ [N
प्रदक्षिणाऽऽवर्त्त-शिखस् तप्त-हाटक-सन्निभः ।
हविस् तत् प्रति-जग्राह पावकः स्वयम् उत्थि(द्-स्थि)तः[5]॥८॥[N
ततोऽग्नि-मध्याद् उत्-तस्थौ काञ्चन-स्यन्दनोत्तमः ।
चतुर्भिः काञ्चनाऽऽपीडैर् अश्वैर् युक्तः प्र-भद्रकैः[6] ।[7]
अन्तर्-धानं गतः श्री-मान् दीप्त-पावक-सन्निभः ॥९॥ [N
आ-रुरोह रथ-श्रेष्ठम् अन्तर्धान-चरं शुभम् ।
अ-वध्यैर् वाजिभिर् युक्तं[8] शस्त्रैश्च च वि-विधैर् युतम्॥१०॥[N
समारोपित-नेपथ्यं रथं[9] शक्ति-समन्वितम् ।
जाज्वल्यमानं वपुषा तपनीय-विभूषितम् ॥११॥ [N
भल्लैश् चन्द्राऽर्ध-चन्द्रैश्[10] च तूर्णं[11] वै संमुप-स्थितः ।
जाम्बूनद-मयो नागस् तरुणाऽऽदित्य-सन्निभः ॥१२॥ [N
बभूवेन्द्र-जितः केतुर् वैडूर्य-समलङ्कृतः ।
हुत्वाऽग्निं राक्षसैर् मन्त्रैस् ततो वचनम् अब्रवीत्॥१३॥ [N
अद्य हत्वा वधाऽर्हौ तौ मिथ्या-प्रव्रजितौ वने[12] ।

---

१. रा$_2$ फ म-स्रुवं ॥ २. रा$_2$ फ म-जीवितम् ॥ ३. रा$_1$ ल$_1$ ल$_2$ ब म-सधूमस्य । ४. रा$_2$ म-स्म नि० ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब म-तत्र हा० । ६. फ-नास्ति । ७. फ म-नास्ति । अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_2$ ब म प्र रा$_2$-हुत्वाग्निं तर्पयित्वा च दैत्यदानवराक्षसान् । वाचयित्वा ततः स्वस्ति प्रयुक्ताशीर्द्विजातिभिः ॥ ८. रा$_2$-युक्तैः ॥ ९. रा$_2$-रथ्यं ॥ १०. म-०र्द्धचन्द्रैस् । ११. रा$_2$ फ-तूणीरैः समुपस्थितं । म-सर्वतः समलंकृतं । १२. प्र रा$_2$ फ म-रणे ।

जयं पित्रे प्र-दास्यामि रावणाय मनः-प्रियम् ॥१४॥ [N
अद्य निर्-वानराम् उर्वीं हत-राघव-लक्ष्मणाम् ।
करिष्यामि स-अ-सुग्रीवाम् इत्य् उक्त्वाऽन्तर्-अधीयत १५ ॥[N
स ददर्श महा-वीर्यौ ताव् उभौ राम-लक्ष्मणौ ।
क्षिपन्तौ शर-जालानि कपि-मध्ये व्यव-स्थितौ ॥१६॥ [N
स तु वैहायसं प्राऽऽप्य रथ-स्थौ (?स्थो) राम-लक्ष्मणौ ।
अ-चक्षुर्विषये तिष्ठन् विव्याध नि-शितैः शरैः ॥१७॥ [N
तौ तस्य रथ-वेगेन परीऽतौ भ्रातराव् उभौ ।
गृहीत्वा धनुषी व्योम्नि घोरान् मुमुचतुः शरान् ॥१८॥ [N
प्र-च्छादयन्तौ गगनं शर-जालैर् महा-बलौ ।
तं महाऽसुर-सङ्काशं न तौ पस्पृशतुः शरैः ॥१९॥ [N
स वि-धार्योऽन्ध-काराणि माया-बल-समन्वितः ।
दिशश् चाऽन्तर्-दधे वीरो नीहार-तमसाऽऽवृतः ॥२०॥ [N
नैव ज्या-तल-निर्घोषो न च नेमि-रथ-स्वनः ।
शुश्रुवे चरतस् तस्य न च रूपं स्म दृश्यते ॥२१॥ [N
घनाऽन्धकार-तिमिरे शिला-वर्षम् इवाऽद्भुतम् ।
शर-वर्षं महा-बाहुश् चचां(?का)ल(?र) शर-संहतः ॥२२॥ [N
राघवौ सूर्य-सङ्काशैर् घोरैर् दत्त-वरैः शरैः ।
विभेद सम्-अरे क्रुद्धः सर्व-गात्रेषु रावणिः ॥२३॥ [N
तौ हन्यमानौ नाराचैर् धाराभिर् इव पर्वतौ ।
हेम-पुङ्खान् नर-व्याघ्रौ घोरान् मुमुचतुः शरान् ॥२४॥ [N

---

१. म-नास्ति । २. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्म प्र-०वीरौ रथस्थौ ॥ ३. म-महासुरसंकाशौ ॥ ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्म प्र-विधूया० । ५. म-०दधन् । ६. रा$_{2}$ फ म-०रतिमिरावृताः । ७. ल$_{1}$ ल$_{2}$ ब श्म प्र रा$_{2}$ फ म-नापि । ८. प्र म-नेमिखरस्वनः ॥ ९. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब श्म प्र-०तिमिरं । १०. रा$_{2}$ म-नाराचशर० । प्र म-०ल शरसंहतः ॥ ११. रा$_{1}$ ल$_{2}$ ब श्म प्र-राघवं । १२. म-बहुतरैर्भृशं । १३. प्र-चक्रमतुः ॥

अन्तरिक्षे त्व् अनु-आसाद्य ते रिपुं कङ्क-वाससः ।
नि-पेतुर् उर्व्यां वि-शिखाः शतशोऽथ सहस्र-शः ॥२५॥ [N
पन्न-गैस् तु शरोद्भूतै रावणिः प्र-हसन् रणे ।
अति-मात्रं शरौघेण ताडयामास राघवौ ॥२६॥ [N
तान् वि-धम्य ततो भल्लैर् अनीकैर् वि-चकर्षतुः ।
राघवौ परमाऽऽयस्तौ ज्वलद्भिर् ज्वलनोपमौ ॥२७॥ [N
यतो यतो ददृशतुः शरान् आ-पततः शितान् ।
ततस् ततो बाण-वर्षं राघवौ वि-ससर्जतुः ॥२८॥ [N
इन्द्र-जित् तु दिशः सर्वा रथेन वि-चरन् बली ।
विव्याध तौ दाशरथी लघु-हस्तः शितैः शरैः ॥२९॥ [N
तौ तु विद्धौ महाऽऽत्मानौ रुक्म-पुङ्खैर् अ-जिह्मगैः ।
बभूवतुर् दाशरथी बन्धु-जीवैर् इवाऽऽवृतौ[12] ॥३०॥[13] [४०
नाऽस्य वेद गतिं कश्-चिन् न रूपं न धनुः-स्वनम् ।
न चाऽस्य लक्षणं कश्-चित् सम्-अर्थश् चाऽऽप्तुम् आ-हवे[16] ३१ N
तेन विद्धाश् च हरयो नि-हताश् च गताऽसवः ।
राघवाऽर्थे पराऽऽक्रान्ता धरण्याम् उप-शेरते ॥३२॥[15] [N
लक्ष्मणस् तु सु-संक्रुद्धः क्रोधाद् भ्रातरम् अब्रवीत् ।
ब्राह्मम् अस्त्रं प्र-योक्ष्यामि वधाऽर्थं सर्व-रक्षसाम् ॥३३॥ [N
तम् उवाच ततो रामो लक्ष्मणं शुभ-लक्षणम् ।
एकस्य रक्षसो हेतोः पृथिवीं हन्तुम् इच्छसि ॥३४॥ [N

---

१. म-तमासाद्य । २. रा₂ फ म-शराः शतस० ॥ ३. म-शरैस्तु पन्नगीभूते । ४. रा₂ फ म-पीड० । ५. प्र-रावणिः ॥ ६. म-निश्चित्य । ७. रा₂ फ म-अनेकैर्निचकर्ततुः । ८. म-त्वरया युक्तौ । ९. फ-नास्ति ॥ १०. प्र-शरान् ॥ ११. रा₂-लघुहस्तौ ॥ १२. रा₂ फ म-बंधुजीवस्रजोपमौ ॥ १३. प्र-नास्ति ॥ १४. रा₂ फ-किंचित्सूर्यस्येवाभ्रसंप्लवे । म-किंचित्सूर्यस्येवाभ्रमण्डले ॥ १५. म-नास्ति ॥ १६. प्र-०णस्त्वथ सं० । म-नास्ति । १७. फ-ब्रह्मणोऽस्त्रं ॥

अ-युध्यमानान् प्र-च्छन्नान् प्राऽञ्जलीञ् छरणाऽऽगतान् ।
पलायमानान् मुत्तांश् च न त्वं हन्तुम् इहाऽर्हसि ॥३५॥ [N
अस्यैव तु वधे बुद्धिं करिष्यामो नरर्षभ ।
आ-देक्ष्यामि महा-वेगान् काम-गान् हरि-यूथपान् ॥३६॥ [N
ते एनं मायया छन्नं क्षुद्रम् अन्तर्-हितं मृधम् ।
राक्षसं नि-हनिष्यन्ति प्रेक्ष्य वानर-यूथपाः ॥३७॥ [N
स एवम् उक्त्वा वचनं महा-यशा
वधाय रौद्रस्य नृशंस-कारिणः ।
रघु-प्रवीरः प्लवगर्षभैर् वृतस्
तदा महाऽऽत्मा त्वरितं निर्-ऐक्षत ॥३८॥ [N

इत्यार्षे रामायणे युद्ध-काण्डे इन्द्रजिद्-युद्धं नाम विंशः सर्गः ॥२०॥

## [वं – २०]= [एकविंशः सर्गः] =[दा – ४५]

स तस्य गतिम् अन्व्-इच्छन् राज-पुत्रः प्रताप-वान् ।
१] रामो दिदेश बल-वान् दश वानर-यूथपान् ॥१॥ [१
जाम्ब-वन्तं सु-षेणं च नीलं च प्लवगर्षभम् ।
२] अङ्ग-दं वालि-पुत्रं च मैन्दं च शरभं तथा ॥२॥ [२
द्वि-विदं च हनू-मन्तं गजं च सु-महाबलम् ।
३] ऋषभं चर्षभ-स्कन्धम् आ-दिदेश रिपुं प्रति ॥३॥ [३

१. रा$_2$ फ म-यत्नं । २. म-करिष्यसि । ३. म-आदेश्यामो ॥ ४. रा$_2$-एनं मायाप्रतिछन्नं । ५. रा$_1$ ल$_1$ ल$_2$ ब अ प्र रा$_2$ फ-क्रुद्धं । ६. रा$_1$ ल$_1$ ल$_2$ अ फ-निष्पतिष्यन्ति ॥ ७. म-महात्मा ॥ ८. फ म-नास्ति । ९. ब प्र रा$_2$-लंकाकांडे । रा$_2$ फ म- युद्धपर्वणि ॥ १०. रा$_1$ ल$_1$ ब-नास्ति ॥ ११. म-द्वौ सुषेणस्य दायादौ ॥ १२. रा$_2$-तु महा० ॥

ते[1] तु प्र-हृष्टा हरयो भीमान् उद्-यम्य पाद-पान् ।
४] आ-काशं विविशुः सर्वे मार्गमाणा यतो भयम् ॥४॥ [४
तेषां वेग-वतां वेगम् इषुभिर् वेगवत्-तरैः ।
५] अस्त्र-वित् परमाऽस्त्रेण यूथ-पांस् तान् अवारयत् ॥५॥ [५
ते भीम-वेगा हरयो नाराचैर् बहुभिः क्षताः ।
६] अन्ध-कारे न ददृशुर् मेघैः सूर्यम् इवाऽऽवृतम् ॥६॥ [६
तेन वानर-शार्दूला राक्षसेन वि-पश्चिता ।
७] निर्-धूताः शर-वेगेन न्य्-अपतन्त मही-तले ॥७॥ [N
ततस् तौ राघवौ वीरौ सर्व-मर्माऽतिगैः शरैः ।
८] भृशम् आ-वेधयाञ्चक्रे रावणिः समितिं-जयः ॥८॥ [७
निरन्तर-शरीरौ ताव् उभौ च भ्रातरौ कृतौ ।
९] क्रुद्धेनेन्द्र-जिता वीरौ पन्न-गैः शरतां गतैः ॥९॥ [८
तयोः क्षतज-मार्गेभ्यो सुस्राव रुधिरं बहु ।
१०] ताव् उभौ सम्प्र-काशेते पुष्पिताव् इव किं-शुकौ ॥१०॥ [९
ततः पर्यन्त-रक्ताऽक्षो नीलाऽञ्जन-चयोपमः ।
११] रावणी राघवौ वाक्यम् अन्तर्धान-गतोऽब्रवीत् ॥११॥ [१०
युध्यमानम् अ-लक्ष्यं मां शक्रोऽपि त्रि-दशेश्वरः ।
१२] द्रष्टुम् आ-सादितुं वाऽपि न शक्तः किं पुनर् युवाम् ॥१२॥ [११
एवम् उक्त्वा तु धर्म-ज्ञौ भ्रातरौ राम-लक्ष्मणौ ।
१३] निर्-बिभेद शितैर् बाणैः शक्राऽशनि-सम-प्रभैः[14] ॥[15]१३॥ [१२

१. प्र-ततो ॥ २. रा$_1$ अ-बलवत्तरैः । ३. ब-शास्त्रवित् । ४. रा$_2$ फ म-यूथपानां ॥ ५. प्र-तत्ते । रा$_2$ फ म-ते तु ॥ ६. म-ततः स । ७. म-नास्ति ॥ ८. रा$_1$ ल$_1$ ल$_2$ ब-०तां गतौ । प्र-सर्वमर्मातिगैः शरैः ॥ ९. रा$_2$ म-प्रचकाशेते ॥ १०. रा$_1$ ल$_1$ ल$_2$ ब अ प्र-रक्ताक्षौ । ११. म-भ्रातरौ ॥ १२. ल$_2$-त्रिदिवेश्वरः । १३. फ-वापि ॥ १४. रा$_2$-चक्रस्पर्शसम० । १५. म-नास्ति ॥

१.४उ] एतौ रोष-परीऽताऽऽत्मा नयामि यम-सादनम् ।[1] [१२उ
भिन्नाऽञ्जन-चय-प्रख्यो[2] वि-स्फार्य वि-पुलं धनुः[3] ।
१.५] भूय एव शरान् घोरान् वि-ससर्ज तयोर् मृधे ॥१.५॥ [१४
ततो मर्मसु मर्म-ज्ञो मज्जयन् नि-शितान् शरान् ।
१.६] राम-लक्ष्मणयोर् वीरो ननाद च मुहुर् मुहुः ॥१६॥ [१५
स रामं लक्ष्मणं चैव घोरैर् दत्त-वरैः शरैः । [स०४४
N] बिभेद सम्-अरे क्रुद्धः सर्व-गात्रेषु राक्षसः ॥१६॥ [३८
अ-दृश्यः सर्व-भूतानां[4] कूट-योधी निशा-चरः ।
N] बबन्ध शर-बन्धेन ताव् उभौ राम-लक्ष्मणौ ॥१७॥ [३९
बद्धौ तु शर-बन्धेन निष्प्रयत्न-भुजौ[5] कृतौ ।[6] [स०४५
१.८] निमेषाऽन्तर-मात्रेण न शक्तौ[7] तं निर्-ईक्षितुम्[8] ॥१.८॥[9] [१.६
तौ तु निर्भिन्न[10]-सर्वाऽङ्गौ शरतल्पाऽऽहितौ रणे[11] ।
१९] ध्वजाव् इव महेन्द्रस्य रज्जु-युक्तौ प्र-कम्पितौ ॥१९॥ [१७
तौ सम्प्र-चलितौ वीराव् अर्दितौ मर्म-भेदिभिः[12] ।
२०] नि-पेततुर् महेष्वासौ जगत्यां जगती-पती ॥२०॥ [१८
तौ वीर-शयने तत्र शयानौ रुधिरोक्षितौ ।
२१] शर-वेष्टित-सर्वाऽङ्गाव् आर्तौ परम-पीडितौ ॥२१॥ [१९
न ह्य् अ-विद्धं तयोर् गात्रे बभूवाऽन्तरम्[13] अण्व् अपि ।
२२] अ[14]-निर्विद्धं च नाऽध्वस्तम् अपि सूक्ष्मम् अ-जिह्मगैः २२ [२०
तौ तु वीरौ शरैर्[15] बद्धौ रक्षसा काम-रूपिणा ।[16]

---

१. म-नास्ति ॥ २. ब-०प्रख्यौ । ३. रा$_1$-राघवः ॥ ४. रा$_2$ फ म-सर्वयोधानां ॥ ५. प्र-निष्प्रयत्नौ भुजौ । ब रा$_2$ म-निःप्रकम्प्यभुजौ । ६. फ-नास्ति । ७. प्र-शक्तस् । रा$_2$ फ-शेकुस् । ८. म-चैव वीक्षितुम् ॥ ९. म-नास्ति । १०. ब-विच्छिन्न० । ११. ब म-नास्ति ॥ १२. म-नास्ति । १३. प्र-०व क्षतम् । १४. रा$_2$-नानिर्भिन्नं । ब-अनिरुद्धं । १५. रा$_1$ ब प्र-शतैर् । १६. अतः परमधिकः पाठः—फ-शराचितशरीरौ तौ क्षितौ निपतिताबुभौ । प्रकाशेतां महाबाहू प्लावितं सलिलं यथा ॥

२४] रक्तं सुस्रुवतुर् गात्राज् जलं प्रस्रवणाद्[1] इव ॥२३॥ [२१
पातितः[2] प्रथमं रामः शरै[3]-तल्प-निपीडितः ।
२५] क्रोधाद् इन्द्र-जिता येन पुरा शक्रोऽपि[4] निर्-जितः ॥२४॥ [२२
पुनश् च लक्ष्मणो वीरो निश्-चेष्टो धरणीं[5] गतः ।
N] पश्चात् स राक्षसेन्द्रो(?न्द्रे)वै(?ण) बबन्धे शर-पञ्जरे ॥२५॥ [N
२६उ] नालीकैर् अर्ध-नालीकैर् भल्लैर् मुक्तैः[10] सहस्र-शः ।
N] नाराचैर् वत्स-दन्तैश् च सिंत-दंष्ट्रैः शरैः शितैः ॥२६॥ [२३
२७उ] स वीर[12]-शयने शिश्ये[13] दिव्यम् आ-दाय कार्मुकम् ।
छिन्न-मुष्टि-परीणाहं त्रिणतं रुक्म-वाजिनम् ॥२७॥ [२४
बाणपाताऽन्तरे रामः पतितं पुरुषर्षभम् ।
२८] शयानं लक्ष्मणं दृष्ट्वा निर्-आशो जीवितेऽभवत् ॥२८॥ [२५
बद्धौ तु वीरौ वि-वृतौ शयानौ
तौ[20] वानराः सम्परि-वार्य सर्वे ।
सम्-आसते वायु-सुत-प्रधाना
N] वि-षादम् आर्ताः परमं च जग्मुः ॥२९॥ [२८

इत्यार्षे[22] रामायणे[23] युद्ध-काण्डे शर-बन्धो नामैकविंशः सर्गः ॥२१॥

---

१. फ-प्रस्नवणाद् ॥ २. रा$_2$-पतितः । ३. रा$_1$ ल$_1$ ल$_2$ ब प्र-शरतुल्यमिपी० । ब-शरतल्पं नि० । रा$_2$-शरतल्पेन पी० । ४. म-शक्रो विनिर्जितः ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब प्र प्र-धरणीतले । ६. रा$_1$ ल$_1$ ल$_2$ ब प्र प्र-पुरः पश्चाद्राक्षसेन्द्रो । ७. रा$_1$ ल$_1$ ल$_2$ ब प्र प्र-ववर्ष । ८. रा$_1$ ल$_1$ ल$_2$ ब प्र प्र फ-०पजरं । ६. म-नास्ति ॥ १०. म-वेतसपत्रकैः । ११. प्र रा$_2$ फ म-सिंह-दंष्ट्रैः ॥ १२. प्र- सुवीर० । १३. प्र-श्रेष्ठो । म-दिव्ये । १४. रा$_1$ ल$_1$ ल$_2$ ब प्र रा$_2$ फ-छमसु० । १५. रा$_1$ ल$_1$ ल$_2$ ब प्र प्र-नृत्ययन् । म-त्रिनेत्रं । १६. रा$_1$-ऊरवा० । १७. प्र-पुरुषर्षभः । १८. म-जीविते तदा ॥ १६. प्र-विवद्धौ तौ वीरनरौ । म-बद्धौ च वी० । २०. रा$_2$-ते । २१. प्र-अन्तः ॥ २२. फ म-नास्ति । २३. प्र-लंकाकांडे । म-युद्धपर्वणि ॥

ततो द्यां पृथिवीं चैव वीऽऽक्षमाणा वनौकसः ।
१] ददृशुः स-हितौ बद्धौ भ्रातरौ राम-लक्ष्मणौ ॥१॥ [१
धर्षित्वोप-रते मेघे कृत-कर्मणि राक्षसे ।
२] आ-पपाताऽथ तं देशं सु-ग्रीवः स-विभीषणः ॥२॥ [२
अङ्ग-दो द्वि-विदो मैन्दः सु-षेणः कु-मुदो नलः ।
३] तूर्णं हनु-मता सार्धम् अ(?आ)गमन् यत्र राघवौ ॥३॥ [३
निश्-चेष्टौ मन्द-निःश्वासौ शोणितौघ-परिप्लुतौ ।
४] शर-जालाऽऽवृतौ स्तब्धौ शयानौ शरतल्प-गौ ॥४॥ [४
निः-श्वसन्तौ यथा नागौ निश्-चेष्टौ मन्द-विक्रमौ ।
५] रुधिर-स्राव-दिग्धाऽङ्गौ तापनीयाव् इव ध्वजौ ॥५॥ [५
तौ वीर-शयने वीरौ शयानौ मन्द-चेतसौ ।
६] यूथ-पैस् तैः परि-वृत्तौ बाष्प-व्याकुल-लोचनैः ॥६॥ [६
राघवौ पतितौ दृष्ट्वा बाण-जाल-समर्दितौ ।
७] बभूवुर् व्यथिताः सर्वे वानराः स-विभीषणाः ॥७॥ [७
अन्तरिक्षं निर्-ऐक्षन्त दिशः सर्वाश् च वानराः ।
८] न तु तं मायया छन्नम् अपश्यन् रावणिं रणे ॥८॥ [८
तं तु माया-प्रैतिच्छन्नं माययैव वि-भीषणः ।
९] वीऽऽक्षमाणो ददर्शाऽथ भ्रातुः पुत्रम् अत्र-स्थितम् ॥९॥ [९
तम् अप्रतिम-कर्माणं अ-प्रतिद्वन्द्वम् आ-हवे ।
१०] ददर्शाऽन्तर्-हितं वीरं नि-नदन्तं वि-भीषणः ॥१०॥ [१०
इन्द्र-जिव् त्व् आत्मनः कर्म तौ शयानौ निर्-ईक्ष्य च ।
११] उवाच परम-प्रीतो हर्षयन् सर्व-नैर्ऋतान् ॥११॥ [१२

---

१. रा$_1$ ल$_1$ल$_2$ प्र फ रा$_2$ म-वीक्ष्यमाणा ॥ २. म-०निःस्वनौ । ३. म-नास्ति । ४. रा$_1$-०जालवृतौ । प्र रा$_2$ फ-०जालाचितौ ॥ ५. रा$_1$ ल$_1$ ल$_2$ ब भ प्र-नास्ति ॥ ६. फ-निरीक्षंते ॥ ७. प्र-मायापरिच्छिन्नं । ८. रा$_1$ ल$_1$ ल$_2$ ब भ प्र म-नास्ति ॥

दूषणस्य नि-हन्तारौ खरस्य च तथैव च ।
१२] शातितौ मामकैर् बाणैर् भ्रातरौ राम-लक्ष्मणौ ॥१२॥ [१३
नैतौ मोक्षयितुं शक्याव् एतस्माद् इषु-बन्धनात् ।
१३] समस्तैश् च समा-गम्य सर्षिसङ्घैः सुराऽसुरैः ॥१३॥ [१४
यत्-कृते चिन्तयानस्य शोकाऽऽर्तस्य पितुर् मम ।
१४] अ-स्पृष्टे शयने गात्रैर् दीर्घ-यामाऽस्ति यामिनी ॥१४॥ [१५
कृत्स्नेयं नगरी लङ्का नदी वर्षास्व् इवाऽऽकुला ।
१५] सोऽयं शूल-करोऽन्-अर्थः सर्वेषां नो हतो मया ॥१५॥ [१६
स-लक्ष्मणस्य रामस्य सर्वेषां च वनौकसाम् ।
१६] वि-क्रमा निष्-फलाः सर्वे यथा शरदि तोय-दाः ॥१६॥ [१७
एवम् उक्त्वा तु तान् सर्वान् राक्षसान् परिपार्श्व-तः ।
१७] यूथ-पान् अथ सर्वांस् तांस् ताडयामास राक्षसः ॥१७॥ [१८
तांस् ताडयित्वा बाणौघैस् त्रासयित्वा च वानरान् ।
१९] प्र-जहास ततो मन्दं मन्दं वचनम् अब्रवीत् ॥१८॥ [२४
शर-बन्धेन घोरेण मया बद्धौ चमू-मुखे ।
२०] स-हितौ भ्रातराव् एतौ नि-शामयत राक्षसाः ॥१९॥ [२५
एवम् उक्तास् तु ते सर्वे राक्षसाः परिपार्श्व-तः ।
२१] परं वि-स्मयम् आ-पन्नाः कर्मणा तेन तोषिताः ॥२०॥ [२६
वि-नेदुश् च महा-नादान् सर्वे ते जलदोपमाः ।
२२] हतो राम इति ज्ञात्वा रावणिं चाऽभ्य्-अपूजयन् ॥२१॥ [२७

१. रा$_{1}$ फ म-च हन्तारं । २. प्र-पातितौ । रा$_{2}$ फ-सूदितौ । म-स्पन्दितौ ॥ ३ रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-न तौ । ४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-एतौ तौ दृढबन्धनैः । ५. रा$_{2}$ फ म-सर्वैरपि ॥ ६. रा$_{2}$ फ म-अस्पृष्टश० । ७. प्र रा$_{2}$-दीर्घमायाति । म-त्रियामा याति ॥ ८. रा$_{2}$ म-मूलहरो० । फ-शूलहरो० । ९. रा$_{2}$ फ म-निहतो ॥ १०. प्र-तथा । रा$_{2}$ म-अपि ॥ ११. रा$_{2}$ फ म-महाहासं ततो ॥ १२. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-उक्त्वा । १३. म-आजग्मुः । १४. रा$_{1}$ ल$_{1}$ ल$_{2}$ ब भ प्र-दीपिताः ॥ १५. रा$_{2}$-बाष्पपू० ॥

